| ग्रन्थनाम। | मूल्यम्। रू० | आ० |
|---|---|---|
| ५६ नित्याषोडशिकार्णवः—भास्कररायोन्नीतटीकासहितः। | ३ | ८ |
| ५७ आचारभूषणम्—हिरण्यकेश्याह्निकमोकोपाह्वत्र्यम्बककृतम्। | ४ | ६ |
| ५८ आचारेन्दुः—माटेइत्युपाह्वत्र्यम्बकविरचितः। | ४ | ० |
| ५९ श्राद्धमञ्जरी—बेळकरोपाह्वबापूभट्टविरचिता। | २ | ० |
| ६० यतिधर्मसंग्रहः—विश्वेश्वरसरस्वतीकृतः। | १ | १२ |
| ६१ गौतमप्रणीतधर्मसूत्रम्—हरदत्तकृतटीकासमेतम्। | २ | ८ |
| ६२ ईशाकेनकठप्रश्नमुण्डमाण्डूक्यानन्दवल्लीभृगूपनिषदः—सटीकाः। | २ | ८ |
| ६३ छान्दोग्योपनिषत्—रङ्गरामानुजविरचितप्रकाशिकोपेता। | ३ | १२ |
| ६४ बृहदारण्यकोपनिषत्—रङ्गरामानुजविरचितप्रकाशिकोपेता। | ३ | ४ |
| ६५ शाङ्खायनब्राह्मणम्—ऋग्वेदान्तर्गतबाष्कलशाखीयम्। | १ | ४ |
| ६६ काव्यप्रकाशः—उद्द्योतयुतप्रदीपसहितः। | ६ | ४ |
| ६७ ब्रह्मसूत्राणि—दीपिकासमेतानि। | ४ | ८ |
| ६८ बृहद्ब्रह्मसंहिता—नारदपञ्चरात्रान्तर्गता। | १ | १२ |
| ६९ ज्ञानार्णवतन्त्रम्—ईश्वरप्रोक्तम्। तन्त्रशास्त्रग्रन्थः। | १ | ४ |
| ७० स्मृत्यर्थसारः—श्रीधराचार्यविरचितः। | १ | १० |
| ७१ बृहद्योगतरङ्गिणी—त्रिमल्लभट्टविरचिता भागद्वयोपेता। | १० | १२ |
| ७२ परिभाषेन्दुशेखरः—वैद्यनाथकृतगदाख्यटीकायुतः। | २ | ६ |
| ७३ गायत्रीपुरश्चरणपद्धतिः—श्रीमच्छंकराचार्यविरचिता। | १ | ८ |
| ७४ द्राह्यायणगृह्यसूत्रवृत्तिः—रुद्रस्कन्दप्रणीता। | १ | ० |
| ७५ ब्रह्मसूत्रभाष्यार्थरत्नमाला—सुब्रह्मण्यविरचिता। | ४ | ४ |
| ७६ ईशकेनकठोपनिषदः—दिगम्बरानुचरकृतव्याख्यासमेताः। | १ | ० |
| ७७ वेदान्तसूक्तिमुक्तावलि—ब्रह्मानन्दसरस्वतीविरचिता। | २ | ६ |
| ७८ त्रिस्थलीसेतुः—नारायणभट्टविरचितः। | ३ | १२ |
| ७९ छान्दोग्योपनिषत्—मिताक्षराव्याख्यासमेता। | २ | ० |
| ८० वाक्यवृत्तिः—श्रीमच्छंकराचार्यकृता सटीका। | ० | ८ |
| ८१ आश्वलायनश्रौतसूत्रम्—नारायणकृतवृत्तिसमेतम्। | ४ | ११ |
| ८२ ब्रह्मसूत्रवृत्तिः—हरिदीक्षितविरचिता। | २ | ७ |
| ८३ संक्षेपशारीरकम्—व्याख्यासहितं भागद्वयोपेतम्। | ६ | १ |
| ८४ अद्वैतामोदः—अभ्यंकरोपाह्ववासुदेवशास्त्रिप्रणीतः। | ३ | ० |

# आनन्दाश्रमसंस्कृतग्रन्थावलिः ।

ग्रन्थाङ्कः २५

श्रीमत्स्कन्दपुराणान्तर्गता




# सूतसंहिता ।

श्रीमाधवाचार्यप्रणीततात्पर्यदीपिकाव्याख्यासमेता ।

---

( तत्राऽऽद्यं खण्डत्रितयम् )

एतत्पुस्तकं वे० शा० रा० रा० पणशीकरोपाह्व-
वासुदेवशास्त्रिभिः संशोधितम् ।

तच्च

बी० ए० इत्युपपदधारिभिः

**विनायक गणेश आपटे**

इत्येतैः






पुण्याख्यपत्तने

**आनन्दाश्रममुद्रणालये**

आयसाक्षरैर्मुद्रयित्वा

प्रकाशितम् ।

द्वितीयेयमङ्कनावृत्तिः ।

शालिवाहनशकाब्दाः १८४५

खिस्ताब्दाः १९२४



मूल्यं सार्धरूप्यकत्रयम् (३॥) ।




## आदर्शपुस्तकोल्लेखपत्रिका ।

अथास्याः सटीकसूतसंहितायाः पुस्तकानि यैः परहितैकपरतया संस्करणार्थं प्रदत्तानि तेषां नामादीनि पुस्तकानां संज्ञाश्च कृतज्ञतया प्रकाश्यन्ते

(क.) इति संज्ञितम्—मूलं सटीकम्, अन्तिमभागे किंचिदपूर्णं, मुंबापुरनिवासिनां वे० शा० रा० रा० 'जयकृष्ण महाराज' इत्येतेषाम्। पत्राणि २८२। एकपत्रस्थाः पङ्क्तयः १३। एकपङ्क्तिस्थान्यक्षराणि ५२। लेखनकालस्तु सार्धशतवत्सरात्पुरतोऽस्तीत्यनुमीयते।

(ख.) इति संज्ञितम्—मूलं सटीकं किंचिदपूर्णं, मुंबापुरनिवासिनां वे० शा० रा० रा० 'जयकृष्णमहाराज' इत्येतेषाम्। पत्राणि ३९५। पङ्क्तयः १३। अक्षराणि ३५। लेखनकालस्तु सार्धशतवत्सरमित इत्यनुमीयते।

(ग.) इति संज्ञितम्—मूलं सटीकं किंचिदपूर्णं, वडलीग्रामनिवासिनां चित्स्वरदीक्षितकुलोत्पन्नानां वे० शा० रा० रा० 'मार्तण्डदीक्षित' इत्येतेषाम्। पत्राणि ३३२। पङ्क्तयः १३। अक्षराणि ४७। लेखनकालस्तु पादोनशतवत्सरमित इत्यनुमीयते।

(घ.) इति संज्ञितम्—मूलं सटीकं पूर्णम्, अष्टेग्रामनिवासिनां रा० रा० "गोविन्दराव लिमये" इत्येतेषाम्। पत्राणि ४२८। पङ्क्तयः १०। अक्षराणि ६०। लेखनकालः शतवत्सरमितोऽस्तीत्यनुमीयते।

(ङ.) इति संज्ञितम्—मूलं सटीकं पूर्णम्, मेणवलीग्रामनिवासिनां रा० रा० 'रावसाहेब फडणीस' इत्येतेषाम्। पत्राणि ४७७। पङ्क्तयः १३। अक्षराणि ४८। लेखनकालः शतवत्सरमित इत्यनुमीयते।

पुण्यपत्तननिवासिभिः 'राजवाडे' इत्युपाह्वैः, वे० शा० रा०रा० 'कृष्णशास्त्री' इत्येतैरेकं पुस्तकं प्रदत्तं, तस्यापि मुद्रणकाले शोधनार्थमतीवोपयोगः संवृत्तः।

समाप्तेयमादर्शपुस्तकोल्लेखपत्रिका।

ॐ तत्सद्ब्रह्मणे नमः

श्रीमत्स्कन्दपुराणान्तर्गता

# सूतसंहिता ।

श्रीमाधवाचार्यप्रणीततात्पर्यदीपिकाव्याख्यासमेता ।

## शिवमाहात्म्यखण्डम् ।

प्रणमामि परं ब्रह्म यतो व्यावृत्तवृत्तयः ।
अविचारसहं वस्तु विषयी कुर्वते धियः ॥ १ ॥
श्रीमत्काशीविलासाख्यक्रियाशक्तीशसेविना ।
श्रीमत्त्र्यम्बकपादाब्जसेवानिष्णातचेतसा ॥ २ ॥
वेदशास्त्रप्रतिष्ठात्रा श्रीमन्माधवमन्त्रिणा ।
तात्पर्यदीपिका सूतसंहिताया विधीयते ॥ ३ ॥
क्रियते तत्प्रकरणतात्पर्यकथनपूर्वकं विशदम् ।
विषमपदवाक्यविवरणं मन्दधियामनुग्रहाय भरत्या च ॥ ४ ॥

इह हि भगवान्बादरायणो लोकानुग्रहैकरसिकतया परशिवस्वरूपाविष्करणप्रधानां संहितामारभमाणो महतः पुरुषार्थस्य प्रत्यूहमात्रपरिचयनिवृत्तये शिष्टाचारानुमितश्रुतिबोधितकर्तव्यताकं परशिवस्य प्रणिधानप्रणामलक्षणं मङ्गलाचरणं स्वयं कृतं शिष्यशिक्षायै ग्रन्थादावुपनिबध्नाति—ऐश्वरमिति श्लोकद्वयेन । द्विविधं हि पारमेश्वरं रूपम् । निष्कलं सकलं चेति । तत्र निष्कलं शुद्धम् । सकलं शंभुलिङ्गमूर्तिरूपं स्वप्रकाशाखण्डसच्चिदानन्दैकरसमद्वितीयं स्वप्रतिपत्तिफलं तत्प्रणिधानं प्रथमार्धेन । निष्कलस्वरूपं बोधानन्दमयं प्रणिधेयत्वेनोक्तं शैवागमे—

" परैश्वर्यप्रापकं ज्ञानं वन्दिम सम्यगितताय वः ।
चिदानन्दघनं पूर्णं प्रत्यग्ब्रह्मात्मना स्थितम् ॥
जगन्मूलमकर्तारं बोधानन्दमयं विभुम् ।
निष्कलं स्वप्रकाशं च संचिन्त्य परमं शिवम् " इति ॥

तथैव—"हृत्तेः साक्षितया वृत्तिप्रागभावस्य च स्थितः ।
बुभुत्सायास्तथा ज्ञोऽस्मीत्यापातज्ञानवस्तुनः ॥
असत्यान्त्यन्तरेन सत्यः सर्वजडस्य तु ।
साधकत्वेन चिद्रूपः सदा प्रेमास्पदत्वतः ॥

१ ग. पुनिदृ° । २ छ. °भातव° । ३ ग. धिया । ४ ग. °न सुभिया° । ५ ख. रामहि° । ६ ग. °धं रा° । ७ ड. °द शाङ्गिन्मासश पुनेः सा° । ८ ड. °सर्वसहा° ।

आनन्दरूपः सर्वार्थसाधकत्वेन हेतुना ।
सर्वसंबन्धवत्त्वेन संपूर्णः शिवसंज्ञितः ॥
जीवेशत्वादिरहितः केवलः स्वप्रभः शिवः ।
इति शैवपुराणेषु कूटस्थः प्रविवेचितः ” ॥

तदुक्तं मृगेन्द्रसंहितायां शिवं प्रकृत्य—

“[1]जगज्जन्मस्थितिध्वंसतिरोभावैककारणम् ।
भूतभौतिकभावानां नियमस्यैतदेव हि ” इति ॥

ऐश्वरं परमं तत्त्वमादिमध्यान्तवर्जितम् ।
आधारं सर्वलोकानामनाधारमविक्रियम् ॥ १ ॥

तत्र ऐश्वरं रूपमपरमचलननयाद्युपाधिविशिष्टम् । परमं निरस्तसमस्तोपाधिकं स्वप्रतिष्ठमखण्डं सच्चिदानन्दैकरसमद्वितीयं तत्तत्त्वम् । त्रैकालिकबाधशून्यम् । मिथ्याभूतपरिकल्पितस्वरूपमायातत्कार्यसंस्पर्शविरहात् । ननु

* घ संज्ञकपुस्तक एव इतः पूर्वमेकादश पद्यानि मङ्गलाचरणरूपेणोपलभ्यन्ते तेषां संग्रहश्च यथा—

सौम्य महेश्वरं साक्षात्तत्त्वविज्ञानमद्वयम् ।
वन्दे संसाररोगस्य भेषजं परमं मुदा ॥ १ ॥
यस्य शक्तिरुमा देवी जगन्माता त्रयीमयी ।
तमहं शंकरं वन्दे महामायानिवृत्तये ॥ २ ॥
यस्य विघ्नेश्वरः श्रीमान्पुत्रः स्कन्दश्च वीर्यवान् ।
तं नमामि महादेवं सर्वदेवनमस्कृतम् ॥ ३ ॥
यस्य प्रसादलेशस्य लेशलेशलवांशकम् ।
लब्ध्वा मुक्तो भवेज्जन्तुस्तं वन्दे परमेश्वरम् ॥ ४ ॥
यस्य लिङ्गार्चनेनैव व्यासः सर्वार्थवित्तमः ।
अभवत्तं महेशानं प्रणमामि घृणानिधिम् ॥ ५ ॥
यस्य मायामयं सर्वं जगदीक्षणपूर्वकम् ।
तं वन्दे शिवमीशानं तेजोराशिमुमापतिम् ॥ ६ ॥
यः समस्तस्य लोकस्य चेतनाचेतनस्य च ।
साक्षी सर्वान्तरः शंभुस्तं वन्दे साम्बमीश्वरम् ॥ ७ ॥
यं विशिष्टजनाः शान्ता वेदान्ताध्ययनादिना ।
जानन्त्यात्मतया वन्दे समहं सत्यचित्सुखम् ॥ ८ ॥
हरभक्तो हिरण्याक्षः शैवपूजापरायणः ।
क्रान्ताक्लेशाद्र (!) क्लीव ईशपूजापरायणः ॥ ९ ॥
ॐकारवल्लभो लुब्धो लोलुपो लोललोचनः ।
महाभागो महाधीमान्महाबाहुर्महोदरः ॥ १० ॥
शक्तिमाञ्छक्तिदः शङ्कुः शङ्कुकर्णः शनैश्चरः ।
भगवान्भाापश्च भवो भवभयापहः ॥ ११ ॥

१ क °ग[?]संहारा[?] ।

मायाकार्येण कालेनावच्छेदादेव कथं तदसंस्पर्श इति तत्राऽऽह—आदीति । स्वप्रागभावावच्छिन्नो भूतकाल आदिः । स्वावच्छिन्नो वर्तमानकालो मध्यः । स्वप्रध्वंसावच्छिन्नो भविष्यत्कालोऽन्तः । एतत्त्रितयवर्जितम् । कलातत्त्वसहभावि हि कालतत्त्वम् । उक्तं हि—पुंसो जगत्कर्तृत्वार्थं मायातस्तत्त्वपञ्चकं भवति कालो नियतिश्च तथा भूतपञ्चकास्त्वभावाश्च । तथा च कलासद्भावी काल एव नास्ति । कुतो निष्कलपरमशिवस्य तत्कृतपरिच्छेदाशङ्केत्यभिप्रायः । इत्थं निष्कलप्रणिधानं कृतम् । सकलमपि द्विविधम् । समस्तजगदात्मकम् । समस्तजगन्नियन्तृ । समस्तजगदात्मकमुपादानत्वात् । जगन्नियन्तृलीलावताररूपेण च नमस्कारः कृतः । तत्र जगदात्मना प्रणाममाह द्वितीयार्धेन—आधारमिति । यथैव हि जगतां नियन्ता सत्त्वमायोपाधिवशात्तमउपाधिवशाज्जगदात्मकः । एवं रजोगुणोपाधिवशाज्जगदाधारोऽपि । उक्ते हि जगन्नियन्तृत्वजगदात्मकत्वे परमेश्वरस्य—"शिवो दाता शिवो भोक्ता शिवः सर्वमिदं जगत्" इति ॥

"स्थितिसंयमकर्ता च जगतोऽस्य जगच्च सः" इति । श्रुतेश्च "सोऽकामयत बहु स्यां प्रजायेय" इति । तेन हि सोऽकामयतेति निमित्तत्वम् । बहु स्यामित्युपादानत्वम् । तथा पारमर्षं सूत्रमपि "प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्" इति । यथैव सर्वलोकानामयमाधार एवमस्यापि कश्चिदन्य आधार इति भ्रमं व्युदस्यति—अनाधारमिति । स्वातिरिक्ताधाररहितः । स भगवः कस्मिन्प्रतिष्ठित इति स्वे महिम्नीति स्वमहिम्नप्रतिष्ठत्वश्रुतेः । ननु जगत आधारश्चेदाधेयजगदात्मना धर्मेण उपचयापचयवत्त्वाविकारित्वं तस्य स्यात् ॥

"उपपन्नपपन्थधर्मो विकरोति हि धर्मिणः" इति न्यायादिति तत्राऽऽह—अविक्रियमिति । कल्पितत्वेन जगतो न स्वाश्रयविकारहेतुता । नहि मरुमरीचिकाजलैर्मरुभूमिरार्द्रीक्रियत इत्यर्थः ॥ १ ॥

अनन्तानन्दबोधाम्बुनिधिमद्भुतविक्रमम् ।
अम्बिकापतिमीशानमनीशं प्रणमाम्यहम् ॥ २ ॥

इदानीं जगन्नियन्तृत्वे लीलावताररूपेण प्रणिधानमाह—अनन्तेति द्वितीयश्लोकेन । अवतारो हि ध्यानपूजाद्यर्थमपि शिवेन स्वी क्रियते । तदुक्तं सुप्रभेदे—

१ क ख. ग. घ पुस्तकेषु स्वप्रध्वंसावच्छिन्नकालो भविष्यदन्तः । स्वावच्छिन्नो वर्तमानकालो मध्यः इति पाठक्रमः । २ ग. तत्त्वपञ्च । ३ घ. °द्भावं स्यात् । ४ क. °कः एवं र° । ५ क. घ मूर्ते च । ६ ङ प्रत्यगु° । ७ ग. °मनिशं । ८ ङ. °मिव दृष्टे° ।

" यतीनां मन्त्रिणां चैव ज्ञानिनां योगिनां तथा ।
ध्यानपूजानिमित्तं हि तनुं गृह्णाति मायया " इति ।

अद्भुता विक्रमास्त्रिपुरदहनादयो यस्य तम् । अम्बिकायाः पार्वत्याः पतिरम्बिकापतिस्तमिति च । विजयपरिणयनादयः परमेश्वरस्य लीला दर्शिताः । तर्हि प्राकृतपुरुषवदेव रागद्वेषादिदोषपारतन्त्र्यात्संसार्येवासौ तत्राह—ईशानमनीशमिति । संसारिणो हि अनीशितृत्वात्पुरुषान्तरपरतन्त्रत्वाच्च स्वयमनीशा ईशवन्तश्च । शिवस्तु लीलयैव विजयपरिणयनादिव्यापारानाचरन्नपि रागद्वेषादिविरही सर्वजगदीशिता च । न पुरुषान्तरपरतन्त्र इति । न लौकिकसम इत्यर्थः । ननु लोकवदेव सर्वेऽपि व्यवहाराः शिवस्यापि श्रूयन्ते । अत एषां लीलारूपतैव कुत इत्यत आह—अनन्तेति । अन्तः परिच्छेदस्तद्रहितयोरानन्दबोधयोरम्बुनिधिः समुद्रश्च तत्कृतपरिच्छेदविरहात् । पारमेश्वरयोरानन्दज्ञानयोर्न लौकिकानन्दज्ञानवदुत्पत्तिविनाशवत्त्वम् । वस्तुकृतपरिच्छेदविरहाच्च तयोरखण्डैकरसत्वम् । अतिशायिनो वस्त्वन्तरस्याभावेन निरतिशयत्वं चेति कुतो लौकिकव्यवहारसाधारण्यशङ्कावकाश इत्यर्थः । यद्यप्यपां निधिरन्तवान्सातिशयश्च तथाऽपि लौकिकानां समुद्रेऽनन्तत्वस्वसातिशयत्वविरहाभिमानात्तदभिमतदृष्टान्तेनैव परमेश्वरस्याप्यनन्तत्वं निरतिशयत्वं प्रदर्शयितुमम्बुनिधिना रूपकं कृतमिति । ननु लौकिका अपि सर्वात्मकादीश्वरादभिन्ना एवेति कथं तदीयौ ज्ञानानन्दौ न तत्सदृशाविति । सत्यम् । तत्सदृशौ । अज्ञानेनाऽऽवृतत्वात्तु तत्सादृश्यं न ते जानन्ति । उक्तं हि—

" अज्ञानेनाऽऽवृतो रामः साक्षान्नारायणोऽपि च ।
स्वस्वरूपं तु नाज्ञासीत् " इति ॥

अतस्तिरोहितज्ञानत्वाल्लौकिकानां व्यापारादुःखमया एव न लीलाः । अनावृतस्वपरमानन्दज्ञानत्वेन तु परमेश्वरस्य विजयपरिणयनादिव्यापारा लीला एवेत्यभिप्रायः । अत्र निष्कलशिवस्य तद्रूपतयाऽवस्थानमेव प्रणामः । सकलस्य तु ध्यानस्तुतिपूजात्मकः । तदुक्तं सुप्रभेदे—

" ध्यानपूजाविहीनं यन्निष्कलं तद्विधायकम् ।
तत्तस्मात्सकलं शम्भुं निष्कलं संप्रपूजयेत् " इति ॥ २ ॥

सत्रावसाने मुनयो विशुद्धहृदया भृशम् ।
नैमिषीया महात्मानमागतं रोमहर्षणम् ॥ ३ ॥

इत्थं मङ्गलाचरणं विधाय ऋषिसूतसंवादात्मना पुराणमारभते—सत्रावसान

इत्यादि । ननु व्यासेन सूताय भार्गवोपदिष्टान्यष्टादश पुराणानि । अधुना तत्पुनर्मुनयः शृण्वन्ति सूतो व्याचष्टे । व्यासस्तु कुरुते मङ्गलाचरणमित्यसंगतमुच्यते । व्यासः सूताय पुराणानि प्रागुपदिश्यापि तान्येव संप्रति मुनिसूतसंवादात्मना निबध्नाति स्वयं क्रियमाणनिबन्धनादौ स्वयमेव मङ्गलमाचरतीति किमनुपपन्नम् । अथ सूताय स्वात्मन उपदेशरूपं परित्यज्य व्यासेन मुनिसूतसंवादात्मना निबन्धने किं प्रयोजनम् । उच्यते । पुराणप्रतिपाद्यायास्तत्त्वविद्यायाः प्रभावातिशयाविष्करणं प्रयोजनम् । तथाहि इत्थंप्रभावेयं विद्या यत्सूतः प्राग्ब्राह्मणीयानपि व्यासात्पुराणश्रवणेनाभिगम्य, अग्रजानामपि मुनीनां स्वयं तत्त्वोपदेशकर्ता जात इति । तत्र सत्रावसाने विशुद्धहृदयाः प्रसन्नेन्द्रियमानसा इति पदत्रयेण मुनीनां परविद्योचिताधिकारसंपत्तिनिरूपणम् । तथाहि श्रुतिस्मृतीतिहासपुराणप्रतिपादितवेदानुवचनयज्ञदानतपोव्रतादिभिः प्रक्षीणसकलकलुषत्वात एव शुद्धबुद्धेर्जनितजिज्ञासस्य परशिवस्वरूपविद्यायामधिकारः । अत एतद्विधविद्याग्रहणाधिकारे कारणगुणगणा उचितत्वादभिधातव्याः । तत्र सत्रावसान इत्यनेन श्रौतसकलकर्मानुष्ठानं चिरमतिसन्ततसञ्चितपापापनयनरूपविशुद्धहृदयत्वे कारणमुच्यते । चतुर्विधा हि सोमयागाः । एकाहाहीनसत्रायनात्मकाः । एकैकदिनसाध्या अग्निष्टोमादय एकाहाः । द्विरात्रादय एकादशरात्रावसाना अहीनाः । द्वादशाहस्तु सत्राहीनोभयात्मकः । त्रयोदशरात्रादीनि सत्राणि । संवत्सरसाध्यान्ययनानि । अयनेष्वपि च सत्रप्रयोगो दृश्यते । गावो वा एतत्सत्रमासत विश्वसृजः समाः सत्रमासतेति तथा ।

" नैमिषे निमिषक्षेत्रे ऋषयः शौनकादयः ।
सत्रं स्वर्गाय लोकाय सहस्रसममासत " इति ।

तदिह नैमिषीयैः क्रियमाणस्यानेकसंवत्सरसाध्यस्यायनत्वेऽपि सत्रपदप्रयोगोपपत्तिः । सत्रं च परमो धर्म इत्यपरेषामपि महतां वेदानुवचनानां दानतपोव्रतादीनामुपलक्षणम् । तेषामपि हि चित्तशुद्धिद्वारा विविदिषाकारणत्वमिष्यमाणवेदनकारणत्वं च श्रूयते । " तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन " इति । तथा पाशुपतव्रतस्यापि परशिवसाक्षात्कारकारणत्वमथर्वशिरसि दृश्यते । अग्निरित्यादिना भस्म गृहीत्वा निमृज्याङ्गानि संस्पृशेत्तस्माद्व्रतमेतत्पाशुपतं पशुपाशविमोक्षायेति । उक्तस्य सत्रपदोपलक्षितस्य कर्मणो बुद्धिशुद्धौ कारणमाह–विशुद्धहृदया इति । इत्थं

१ ख. नि । न° । २ क ख ग घ °र्यति । ३ क ख ग घ °शकर्ता° । ४ ख. °रगम्° । ५ घ आत्म दृश्यते ।

" यतीनां मन्त्रिणां चैव ज्ञानिनां योगिनां तथा ।
ध्यानपूजानिमित्तं हि तनुं गृह्णाति मायया " इति ।

अद्भुता विक्रमास्त्रिपुरदहनादयो यस्य तम् । अम्बिकायाः पार्वत्याः पतिरम्बिकापतिस्तमिति च । विजयपरिणयनादयः परमेश्वरस्य लीला दर्शिताः । तर्हि प्राकृतपुरुषवदेव रागद्वेषादिदोषपारतन्त्र्यात्संसार्येवासौ तत्राह—ईशानमनीशमिति । संसारिणो हि अनीशितृत्वात्पुरुषान्तरपरतन्त्रत्वाच्च स्वयमनीशा ईशवन्तश्च । शिवस्तु लीलयैव विजयपरिणयनादिव्यापारानाचरन्नपि रागद्वेषादिविरही सर्वजगदीशिता च । न पुरुषान्तरपरतन्त्र इति । न लौकिकसम इत्यर्थः । ननु लोकवदेव सर्वेऽपि व्यवहाराः शिवस्यापि श्रूयन्ते । अत एषां लीलारूपत्वैव कुत इत्यत आह—अनन्तेति । अन्तः परिच्छेदस्तद्रहितयोरानन्दबोधयोरम्बुनिधिः समुद्रश्च त्रयकृतपरिच्छेदविरहात् । पारमेश्वरयोरानन्दज्ञानयोर्न लौकिकानन्दज्ञानवदुत्पत्तिविनाशवत्त्वम् । वस्तुकृतपरिच्छेदविरहाच्च तयोरखण्डैकरसत्वम् । अतिशायिनो वस्त्वन्तरस्याभावेन निरतिशयत्वं चेति कुतो लौकिकव्यवहारसाधारणाशङ्कावकाश इत्यर्थः । यद्यप्यपां निधिरन्तवान्सातिशयश्च तथाऽपि लौकिकानां समुद्रेऽन्तवत्त्वसातिशयत्वविरहाभिमानात्तदभिमतदृष्टान्तेनैव परमेश्वरस्याप्यनन्तत्वं निरतिशयत्वं प्रदर्शयितुमम्बुनिधिना रूपकं कृतमिति । ननु लौकिका अपि सर्वात्मकादीश्वरादभिन्ना एवेति कथं तदीयौ ज्ञानानन्दौ न तत्सदृशाविति । सत्यम् । तत्सदृशौ । अज्ञानेनाऽऽवृततयात्तु तत्सादृश्यं न ते जानन्ति । उक्तं हि—

" अज्ञानेनाऽऽवृतो रामः साक्षान्नारायणोऽपि च ।
स्वस्वरूपं तु नाज्ञासीत् " इति ॥

अतस्तिरोहितज्ञानत्वाल्लौकिकानां व्यापारा दुःखमया एव न लीलाः । अनावरणपरमानन्दज्ञानत्वेन तु परमेश्वरस्य विजयपरिणयनादिव्यापारा लीला एवेत्यभिप्रायः । अत्र निष्कलशिवस्य तद्रूपतयाऽवस्थानमेव प्रणामः । सकलस्य तु ध्यानस्तुतिपूजात्मकः । तदुक्तं सुप्रभेदे—

" ध्यानपूजाविहीनं यन्निष्कलं तद्विधायकम् ।
तत्तस्मात्सकलं शम्भुं निष्कलं संप्रपूजयेत् " इति ॥ २ ॥

सत्रावमाने मुनयो विशुद्धहृदया भृशम् ।
नैमिषीया महात्मानमागतं रोमहर्षणम् ॥ ३ ॥

इत्थं मङ्गलाचरणं विधाय ऋषिसूतसंवादात्मना पुराणमारभते—सत्रावसान

इत्यादि । ननु व्यासेन सूताय प्रागेवोपदिष्टान्यष्टादश पुराणानि । अधुना तत्पुनर्मुनयः शृण्वन्ति सूतो व्याचष्टे । व्यासस्तु कुरुते मङ्गलाचरणमित्यसंगतमुच्यते । व्यासः सूताय पुराणानि प्रागुपदिश्यापि तान्येव संप्रति मुनिसूतसंवादात्मना निबध्नाति स्वयं क्रियमाणनिबन्धनादौ स्वयमेव मङ्गलमाचरतीति किमनुपपन्नम् । अथ सूताय स्वात्मन उपदेशरूपं परित्यज्य व्यासेन मुनिसूतसंवादात्मना निबन्धने किं प्रयोजनम् । उच्यते । पुराणप्रतिपाद्यायास्तत्त्वविद्यायाः प्रभावातिशयाविष्करणं प्रयोजनम् । तथाहि इत्थंप्रभावेयं विद्या यत्सूतः प्राक्प्रातिलोमिकजातिरपि व्यासात्पुराणमुखादेनामधिगम्य, अग्रजानामपि मुनीनां स्वयं तत्त्वोपदेशकर्ता जात इति । तत्र सत्रावसाने विशुद्धहृदयाः प्रसन्नेन्द्रियमानसा इति पदत्रयेण मुनीनां परविद्योचिताधिकारसंपत्तिनिरूपणम् । तथाहि श्रुतिस्मृतीतिहासपुराणप्रतिपादितवेदानुवचनयज्ञदानतपोव्रतादिभिः प्रक्षीणसकलकलुषस्यात एव शुद्धबुद्धेर्जनितजिज्ञासस्य परशिवस्वरूपविद्यायामधिकारः । अत ईदृग्विधविद्याग्रहणाधिकारे कारणगुणगणा उचितत्वादाविष्कर्तव्याः । तत्र सत्रावसान इत्यनेन श्रौतसकलकर्मानुष्ठानं विद्याप्रतिबन्धकसकलपापापनयनरूपविशुद्धहृदयत्वे कारणमुच्यते । चतुर्विधा हि सोमयागाः । एकाहाहीनसत्रायनात्मकाः । एकैकदिनसाध्या अग्निष्टोमादय एकाहाः । द्विरात्रादय एकादशरात्रावसाना अहीनाः । द्वादशाहस्तु सत्राहीनोभयात्मकः । त्रयोदशरात्रादीनि सत्राणि । संवत्सरसाध्यान्ययनानि । अयनेष्वपि च सत्रप्रयोगो दृश्यते । गावो वा एतत्सत्रमासत विश्वसृजः समाः सत्रमासतेति तथा ।

“ नैमिषे निमिषक्षेत्रे ऋषयः शौनकादयः ।
सत्रं स्वर्गाय लोकाय सहस्रसममासत ” इति ।

तदिह नैमिषीयैः क्रियमाणस्यानेकसंवत्सरसाध्यस्यायनत्वेऽपि सत्रपदप्रयोगोपपत्तिः । सत्रं च परमो धर्म इत्यपरेषामपि महतां वेदानुवचनानां दानतपोव्रतादीनामुपलक्षणम् । तेषामपि हि चित्तशुद्धिद्वारा विविदिषाकारणत्वमिष्यमाणवेदनकारणत्वं च श्रूयते । “ तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन ” इति । तथा पाशुपतव्रतस्यापि परशिवसाक्षात्कारकारणत्वमथर्वशिरसि दृश्यते । अग्निरित्यादिना भस्म गृहीत्वा निमृज्याङ्गानि संस्पृशेत्तस्माद्व्रतमेतत्पाशुपतं पशुपाशविमोक्षायेति । उक्तस्य सत्रपदोपलक्षितस्य कर्मराशेर्बुद्धिशुद्धौ कारणभावमाह—विशुद्धहृदया इति । हृदयं

---

१ ख. दिना । न° । २ क. ख. ग. घ. °च्च तीति । ३ क. ग. घ. °द्वा-चनी° । ४ घ. °ण्डकम्° । ५ घ. °योगा दृश्यन्ते ।

शुद्धिस्तस्य विशुद्धिर्नाम संचितदुरितापनयनेन तन्निबन्धनस्य दुःखस्य निरासः । नैमिषीया इति । ब्रह्मणा विसृष्टस्य चक्रस्य नेमिः शीर्यते कुण्ठी भवति यत्र तन्नेमिषं नेमिषमेव नैमिषम् । तथाचोक्तं वायवीये –

" एतन्मनोमयं चक्रं मया सृष्टं विसृज्यते ।
यत्रास्य शीर्यते नेमिर्नैमिषं तच्छुभावहम् ॥
इत्युक्त्वा सूर्यसंकाशं चक्रं सृष्ट्वा मनोमयम् ।
प्रणिपत्य महादेवं विससर्ज पितामहः ॥
तेऽपि हृष्टतरा विप्राः प्रणम्य जगतां पतिम् ।
प्रययुस्तस्य चक्रस्य यत्र नेमिर्व्यशीर्यत ॥
तद्वनं तेन विख्यातं नैमिषं मुनिपूजितम् " इति ॥

नैमिषमेषां निवास इति नैमिषीयाः । तथा प्रसन्नेन्द्रियमानसा इति । मनसः प्रसादो नाम रजस्तमोभ्यामनभिभवादावरणविक्षेपविरहेण तत्त्वप्रणिधाने ऐकाग्र्यम् । इन्द्रियाणां प्रसादो नाम प्रसन्नता मनःप्रातिकूल्यपरिहारेण प्रत्युत तदानुकूल्येनैव वर्तनम् । श्रूयते हि—

" यस्त्वविज्ञानवान्भवत्यमनस्कः सदाऽशुचिः ।
तस्येन्द्रियाण्यवश्यानि दुष्टाश्वा इव सारथेः ॥
यस्तु विज्ञानवान्भवति समनस्कः सदा शुचिः ।
तस्येन्द्रियाणि वश्यानि सदश्वा इव सारथेः " इति ॥

पतञ्जलिरप्याह "स्वविषयासंप्रयोगे चित्तस्वरूपानुकार इवेन्द्रियाणां प्रत्याहारः " इति । इत्थमिह जन्मनि जन्मान्तरे वा विहितैर्व्रतदानादिभिः संचितदुरितनिरासद्वारा रजस्तमोभ्यामनभिभूतहृदयास्तत्त्वजिज्ञासवो विद्याग्रहणाधिकारिणो दर्शिताः । विद्योपदेशे तु सूतस्येदानीमधिकारितामाह—महात्मानमागतमिति । उभयं हि तत्रापेक्षितम् । अनुग्रहसामर्थ्यमनुग्रहशीलत्वं चेति । तत्र महात्मानमिति महादेवप्रसादादासादितपरशिवस्य साक्षात्कारनिबन्धनमनुग्रहसामर्थ्यमुक्तम् । आगतमिति विशिष्टाधिकारिलाभात्तदुद्धरणार्थमनाहूतस्यापि स्वयमेवाभिगमनात्परमकारुणिकत्वादनुग्रहशीलत्वमुक्तम् । यथा जनकं प्रति याज्ञवल्क्यस्येति ॥ ३ ॥

---

१ घ °•भस्य । २ ख °पर्यां हारेण । ३ क घ. मन प्रतिकूल्यपरि° । म छ मन प्रति शमिदू-ा° । ४ क [illegible] घ °भिभवादसृ° । ५ क घ महत्तप प्रकर्षाद्वासादितपर शिवसा° ।

दृष्ट्वा यथार्हं संपूज्य प्रसन्नेन्द्रियमानसाः ।
पप्रच्छुः संहितां पुण्यां सूतं पौराणिकं मुदा ॥ ४ ॥

अथ विद्याग्रहणाधिकारसंपन्ना मुनय उपदेशोचितगुरुलाभनिबन्धनया प्रीत्या तं परिपूज्य स्वजिज्ञासामाविष्कृतवन्त इत्याह—पप्रच्छुरिति । उक्तं हि—

"तद्विद्धि प्रणिपातेन परिप्रश्नेन सेवया ।
उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिनः" इति ॥ ४ ॥

एवं पृष्टो मुनिश्रेष्ठैः सूतः सर्वार्थदायिनम् ।
महादेवं महात्मानं ध्यात्वा व्यासं च भक्तितः ॥ ५ ॥

एवं मुनिभिः पृष्टो मुनीनां पुराणसंहिताश्रवणे मुख्याधिकारसिद्धये परशिवप्रणिधानपुरःसरां शिष्यावलोकनरूपां चाक्षुषीं दीक्षामकार्षीदित्याह—एवं पृष्ट इत्यादि । उक्ता ह्यागमेषु चाक्षुषी दीक्षा—

"चक्षुरुन्मील्य यत्तत्त्वं ध्यात्वा शिष्यं समीक्षते ।
पशुबन्धविमोक्षाय दीक्षेयं चाक्षुषी मता" इति ॥
"यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ ।
तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः" ॥

इति श्वेताश्वतरश्रुतेः परशिवप्रणिधानवद्गुरुप्रणिधानमपि विधेयमित्याह—व्यासं चेति ॥ ५ ॥

समाहितमना भूत्वा विलोक्य मुनिसत्तमान् ।
वक्तुमारभते सूतः संहितां श्रुतिसंमिताम् ॥ ६ ॥

संहितां श्रुतिसंमिताम् । सकलश्रुत्यर्थसंग्रहात्मिकामित्यर्थः ॥ ६ ॥

सूत उवाच—

ब्राह्मं पुराणं प्रथमं द्वितीयं पाद्ममुच्यते ।
तृतीयं वैष्णवं प्रोक्तं चतुर्थं शैवमुच्यते ॥ ७ ॥

विवक्षिताया अस्याः संहितया व्यासमुखादागतत्वेन प्रामाण्यं स्थापयितुं नानामुनिसंगीतसकलोपपुराणमूलभूतानामष्टादशानां पुराणानां वेदशाखाविभागस्य च प्रणयनेन व्यासस्य सर्वज्ञत्वमत एव तस्य माहेश्वरावतारत्वं च प्रतिपादयितुमष्टादश पुराणान्यनुक्रामति—ब्राह्ममित्यादि । ब्रह्मसंबन्धि ब्राह्मम् । 'तस्ये-

१ ङ. °नरथा । २ घ. °सर शि° । ३ घ. °त्त्व त्त्वर श° । ४ क. समदाप । ५ ङ. °द्भनीं° । ६ क. ख. घ. °स्व हार्थ° । ७ ङ. °स्य महे° ।

दम्' इत्यपि ' नस्तद्धिते ' इति टिलोपस्य, अश्मिति प्रकृतिभावेन निरासेऽपि ' प्रातोऽजातौ ' इति निपातनाट्टिलोपः ॥ ७ ॥

ततो भागवतं प्रोक्तं भविष्याख्यं ततः परम् ।
सप्तमं नारदीयं च मार्कण्डेयं तथाऽष्टमम् ॥ ८ ॥
आग्नेयं नवमं पश्चाद्ब्रह्मवैवर्तमेव च ।
ततो लैङ्गं वराहं च ततः स्कान्दमनुत्तमम् ॥ ९ ॥
वामनाख्यं ततः कौर्मं मात्स्यं तत्परमुच्यते[१] ।
गरुडाख्यं ततः प्रोक्तं ब्रह्माण्डं तत्परं विदुः ॥ १० ॥
ग्रन्थतश्च चतुर्लक्षं पुराणं मुनिपुङ्गवाः ।
अष्टादशपुराणानां कर्ता सत्यवतीसुतः ॥ ११ ॥

॥ ८ ॥ ९ ॥ १० ॥ ग्रन्थतश्च चतुर्लक्षमिति संख्याभिधानं प्रक्षेपविप्लव-[२]परिहाराय ॥ ११ ॥

कामिकादिप्रभेदानां यथा देवो महेश्वरः ।
अष्टादश पुराणानि श्रुत्वा सत्यवतीसुतात् ॥ १२ ॥

कामिककारणादीनामागमसंहितानां शिवेनैव प्रणयनात्प्रामाण्ये यथा विश्रम्भ एवं नारायणावतारेण व्यासेन प्रणयनात्पुराणेष्वप्यसार्वत्रिकिमिष्ट इत्याह— अष्टादशपुराणानामिति । नानामुनिप्रणीतानामुपपुराणानामप्येतन्मूलत्वादेतेषां प्रणेतुर्व्यासस्य सार्वज्ञ्यं किं वक्तव्यमित्याह—अष्टादश पुराणानि श्रुत्वेति॥१२॥

अन्यान्युपपुराणानि मुनिभिः कीर्तितानि तु ।
आद्यं सनत्कुमारेण प्रोक्तं वेदविदां वराः ॥ १३ ॥
द्वितीयं नारसिंहाख्यं तृतीयं नान्दमेव च ।
चतुर्थं शिवधर्माख्यं दौर्वासं पञ्चमं विदुः ॥ १४ ॥
षष्ठं तु नारदीयाख्यं कापिलं सप्तमं विदुः ।
अष्टमं मानवं प्रोक्तं ततश्चोशनसेरितम् ॥ १५ ॥
ततो ब्रह्माण्डसंज्ञं तु वारुणाख्यं ततः परम् ।
ततः कालीपुराणाख्यं विशिष्टं मुनिपुङ्गवाः ॥ १६ ॥

---

१ क. °यनमुच्यत । २ ङ. विकल्पपरि° । ३ ङ. °प्येन य° । ४ ख °वनशिव । ५ ख. ग. वामनं ।

ततो वासिष्ठलैङ्गाख्यं प्रोक्तं माहेश्वरं परम् ।
ततः साम्बपुराणाख्यं ततः सौरं महाद्भुतम् ॥ १७ ॥
पाराशरं ततः प्रोक्तं मारीचाख्यं ततः परम् ।
भार्गवाख्यं ततः प्रोक्तं सर्वधर्मार्थसाधकम् ॥ १८ ॥

उपपुराणान्यष्टादशानुक्रामति—आद्यं सनत्कुमारेण प्रोक्तमित्यादिना ॥ ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥

लक्षं तु ग्रन्थसंख्याभिः सर्वविज्ञानसागरम् ।
स्कान्दमद्याभिवक्ष्यामि पुराणं श्रुतिसंमितम् ॥ १९ ॥
षड्विधं संहिताभेदैः पञ्चाशत्खण्डमण्डितम् ।
आद्या सनत्कुमारोक्ता द्वितीया सूतसंहिता ॥ २० ॥

अथेदानीं विवक्षितां सूतसंहितामवतारयितुमनुक्रान्तानां पुराणानां मध्ये त्रयोदशस्य स्कान्दपुराणस्य संहितापदविभागमाह—स्कान्दमद्याभिवक्ष्यामीति ॥ १९ ॥ २० ॥

तृतीया शांकरी विप्राश्चतुर्थी वैष्णवी मता ।
तत्परा संहिता ब्राह्मी सौराऽन्त्या संहिता मता ॥ २१ ॥
ग्रन्थतः पञ्चपञ्चाशत्सहस्रेणोपलक्षिता ।
आद्या तु संहिता विप्रा द्वितीया षट्सहस्रिका ॥ २२ ॥
तृतीया ग्रन्थतस्त्रिंशत्सहस्रेणोपलक्षिता[1] ।
तुरीया संहिता पञ्चसहस्रेणाभिनिर्मिता ॥ २३ ॥
ततोऽन्या त्रिसहस्रेण ग्रन्थेनैव विनिर्मिता ।
अन्या सहस्रतः सृष्टा ग्रन्थतः पण्डितोत्तमाः ॥ २४ ॥

सौराऽन्त्येति । सूरसंबन्धि सौरम् । तदस्यामस्तीति सौरा 'अर्शआदिभ्योऽच्' इत्यजन्तं मत्वर्थीयान्ताट्टाप् । सूरस्येयं संहितेति व्युत्पत्तौ 'तस्येदम्' इत्यणन्तान्ङीपा भवितव्यमिति ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥

१ ग. ङ. °कोटिलक्षिता ।

द्वितीयां संहितां वक्ष्ये सर्वपापप्रणाशिनीम् ।
मुनिभिर्देवगन्धर्वैः पूजितामतिशोभनाम् ॥ २५ ॥

इत्थं विभागमभिधाय विवक्षितां संहितां सूतः प्रतिजानीते—द्वितीयां संहितां वक्ष्य इति ॥ २५ ॥

चतुर्धा खण्डिता साऽपि पवित्रा वेदसंमिता ।
शिवमाहात्म्यखण्डाख्यः प्रथमः परिकीर्तितः ॥ २६ ॥

यद्यपि खण्डान्तरेष्वपि शिवमाहात्म्यमुच्यते तथाऽपि प्रथमस्य तत्प्राधान्येन व्यपदेशः ॥ २६ ॥

द्वितीयो ज्ञानयोगाख्यः सर्ववेदान्तसंग्रहः ।
तृतीयो मुक्तिखण्डाख्यश्चतुर्थो यज्ञवैभवः ॥ २७ ॥

द्वितीयो ज्ञानयोगाख्य इति । ज्ञानस्य योगा उपाया यमनियमाद्यो ज्ञानयोगा आख्यायन्तेऽस्मिन्नित्याख्यः । 'आतश्चोपसर्गे' इति कप्रत्ययः । ज्ञानयोगानामाख्य इति संबन्धसामान्यषष्ठ्याः समासस्य तु प्रकृते संबन्धविशेषे कर्मत्वे योग्यतावशात्पर्यवसानात् । न च कर्मणि षष्ठ्यैव समासः स किं न स्यादिति वक्तव्यम् । 'कर्मण्यण्' इत्यनेन परेण बाधप्राप्तादिति । यज्ञवैभवखण्डे तु यज्ञा यज्ञविशेषा वक्ष्यन्ते ते सर्वे ज्ञानात्मका एव यज्ञाः । इह तु तदुपाया यमनियमादय इत्यसंकरः । यज्ञवैभव इति । यज्ञानां वैभवः प्रभावोऽस्मिन्निति यज्ञवैभवः ॥ २७ ॥

आद्यः सप्तशतं प्रोक्तो ग्रन्थतः पण्डितोत्तमाः ।
द्वितीयो ग्रन्थतः सप्तशतं त्रिंशत्ततोऽधिकम् ॥ २८ ॥
ततोऽधिकं च संख्या मुनयः परिकीर्तितः ।
तृतीयः षट्शतं विप्राः सप्तत्रिंशद्विवर्जितः ॥ २९ ॥

आद्यः सप्तशतमिति । सप्तानां शतानां समाहारः सप्तशतमिति समाहारे द्विगुः । अकारान्तत्वेन प्राप्तं स्त्रीलिङ्गत्वं 'पात्रादिभ्यः प्रतिषेधः' इत्यनेन निषिध्यते । नन्वेषोऽयं खण्डः कथं सप्तशतसमाहारात्मकः । अत उक्तं ग्रन्थत इति । ग्रन्थद्वारा स्वावयवभूतानां ग्रन्थानां सप्तशतसमाहारात्मकत्वात्तदभेदेन स्वयमपि सप्तशतमित्यर्थः । ततोऽधिकमिति । अधिकं च किंचिदस्तीति

सामान्येनोपक्रम्य कियन्तीति जिज्ञासायां त्रिंशदिति 'शक्यमञ्जलिभिः पातुं वाताः केतकिगन्धिनः' इतिवत् ॥ २८ ॥ २९ ॥

चतुर्थस्तु मुनिश्रेष्ठाः सहस्राणां चतुष्टयम् ।
उपर्यधोभागभेदाद्द्विधाभूतः स उच्यते ॥ ३० ॥

चतुर्थ इति । चतुर्थखण्ड उपरिमभागोऽधोभाग इति भेदेन द्विप्रकारः ॥ ३० ॥

आद्यस्त्रयोदशाध्यायो द्वितीयो विंशतिस्तथा ।
तृतीयो नव विप्रेन्द्राश्चतुर्थस्तु तथैव च ॥ ३१ ॥

प्रकृतसंहितागतखण्डचतुष्टयस्याध्यायविभागमाह—आद्यस्त्रयोदशाध्याय इति । आद्यः खण्डोऽध्यायैस्त्रयोदश ग्रन्थतः सप्तशतमितिवत् । ननु त्रयोदशभिरध्यायैरिति 'दिक्संख्ये संज्ञायाम्' इत्युक्तत्वात् । इह च द्विगुसमासनिमित्तानां संज्ञादीनामभावात् । आद्यस्त्रयोदशाध्याय इति तु पाठः श्रेयान् । तत्र हि त्रयोदशेति पृथक्पदम् ॥ ३१ ॥

सप्तषष्टिः समस्तानां वेदानामर्थ आस्तिकाः ।
अस्यामेव स्थितः साक्षात्संहितायां न संशयः ॥ ३२ ॥

तत्र प्रथमे खण्डे प्रथमेऽध्याये ग्रन्थावतारः । द्वितीये पाशुपतव्रतम् । तृतीये नन्दीश्वरविष्णुसंवादेनेश्वरप्रतिपादनम् । चतुर्थे ईश्वरपूजाविधानं देवपूजाफलं च । पञ्चमे शक्तिपूजाविधिः । षष्ठे शिवभक्तपूजा । सप्तमे मुक्तिसाधनम् । अष्टमे कालपरिमाणकथनपूर्वकमवान्तरकल्पकथनम् । नवमे पृथिव्युद्धरणम् । दशमे ब्रह्मणा सृष्टिकथनम् । एकादशे हिरण्यगर्भादिविशेषसृष्टिः । द्वादशे जातिनिर्णयः । त्रयोदशे तीर्थमाहात्म्यम् ॥ ॥ द्वितीयखण्डे विंशतिरध्यायाः ॥ तत्र प्रथमेऽध्याये ज्ञानयोगसंप्रदायपरम्परा । द्वितीये आत्मना सृष्टिः । तृतीये ब्रह्मचर्याश्रमविधिः । चतुर्थे गृहस्थाश्रमविधिः । पञ्चमे वानप्रस्थाश्रमविधिः । षष्ठे संन्यासविधिः । सप्तमे प्रायश्चित्तम् । अष्टमे दानधर्मफलम् । नवमे पापकर्मफलम् । दशमे पिण्डोत्पत्तिः । एकादशे नाडीचक्रम् । द्वादशे नाडीशुद्धिः त्रयोदशेऽष्टाङ्गयोगे यमविधिः । चतुर्दशे नियमविधिः । पञ्चदश आसनविधानम् । षोडशे प्राणायामविधिः । सप्तदशे प्रत्याहारविधानम् । अष्टादशे धारणाविधिः । एकोनविंशे ध्यानविधिः । विंशे समाधिः ॥ ॥ तृतीये मुक्तिखण्डे नवाध्यायाः ॥ तत्र प्रथमे मुक्तिहेतु[illegible] ।

द्वितीये मुक्तिभेदकथनम् । तृतीये मुक्त्युपायकथनम् । चतुर्थे मोचककथनम् । पञ्चमे मोचकमदकथनम् । षष्ठे ज्ञानोत्पत्तिकथनम् । सप्तमे गुरूपसदनशुश्रूषणमहिमा । अष्टमे व्याघ्रपुरे देवानामुपदेशः । नवमे ईश्वरनृत्यदर्शनम् ॥ ॥ चतुर्थखण्डे सप्तषष्टिरध्यायाः । तत्र पूर्वभागे सप्तचत्वारिंशत् । तत्र प्रथमेऽध्याये सर्ववेदार्थप्रश्नः । द्वितीये परापरवेदार्थविचारः । तृतीये कर्मयज्ञवैभवम् । चतुर्थे वाचिकयज्ञः । पञ्चमे प्रणवविचारः । षष्ठे गायत्रीप्रपञ्चः । सप्तमे आत्ममन्त्रः । अष्टमे पञ्चाक्षरविचारः । नवमे ध्यानयज्ञः । दशमे ज्ञानयज्ञः । एकादशादिपञ्चस्वध्यायेषु ज्ञानयज्ञविशेषाः । षोडशे ज्ञानोत्पत्तिकारणम् । सप्तदशे वैराग्यविचारः । अष्टादशेऽनित्यवस्तुविचारः । एकोनविंशे नित्यवस्तुविचारः । विंशे विशिष्टधर्मविचारः । एकविंशे मुक्तिसाधनविचारः । द्वाविंशे मार्गप्रामाण्यम् । त्रयोविंशे शंकरप्रसादः । चतुर्विंशपञ्चविंशयोः प्रसादवैभवम् । षड्विंशे शिवभक्तिविचारः । सप्तविंशे परपदस्वरूपविचारः । अष्टाविंशे शिवलिङ्गस्वरूपकथनम् । एकोनत्रिंशे शिवस्थानविचारः । त्रिंशे भस्मधारणवैभवम् । एकत्रिंशे शिवप्रीतिकरं जीवब्रह्मैक्यज्ञानम् । द्वात्रिंशे भक्त्यभावकारणम् । त्रयस्त्रिंशे परतत्त्वनामविचारः । चतुस्त्रिंशे महादेवप्रसादकारणम् । पञ्चत्रिंशे संप्रदायपरम्पराविचारः । षट्त्रिंशे सद्योमुक्तिकरक्षेत्रमहिमा । सप्तत्रिंशे मुक्त्युपायविचारः । अष्टात्रिंशे मुक्तिसाधनविचारः । एकोनचत्वारिंशे वेदानामविरोधः । चत्वारिंशे सर्वसिद्धिकरधर्मविचारः । एकचत्वारिंशे पातकविचारः । द्विचत्वारिंशे प्रायश्चित्तविचारः । त्रिचत्वारिंशे पापशुद्ध्युपायाः । चतुश्चत्वारिंशे द्रव्यशुद्धिविचारः । पञ्चचत्वारिंशेऽभक्ष्यनिवृत्तिः । षट्चत्वारिंशे मृत्युसूचनम् । सप्तचत्वारिंशेऽवशिष्टपापस्वरूपकथनम् ॥ चतुर्थखण्डस्योत्तरभागे विंशतिरध्यायाः ॥ तत्र प्रथमे ब्रह्मगीतिः । द्वितीये वेदार्थविचारः । तृतीये साक्षिशिवस्वरूपकथनम् । चतुर्थे साक्ष्यसिद्धिकथनम् । पञ्चमे आदेशकथनम् । षष्ठे दहरोपासनम् । सप्तमे वस्तुस्वरूपविचारः । अष्टमे तत्त्ववेदनविधिः । नवमे आनन्दस्वरूपकथनम् । दशमे आत्मनो ब्रह्मत्वप्रतिपादनम् । एकादशे ब्रह्मणः सर्वशरीरस्थितिः । द्वादशे शिवस्याहंप्रत्ययाश्रयत्वम् । त्रयोदशे सूतगीतिः । चतुर्दशे आत्मना सृष्टिः । पञ्चदशे सामान्यसृष्टिः । षोडशे विशेषसृष्टिः । सप्तदशे आत्मस्वरूपकथनम् । अष्टादशे सर्वशास्त्रार्थसंग्रहः । एकोनविंशे रहस्यविचारः । विंशे सर्ववेदान्तसंग्रहः । इति सामान्येनाध्यायार्थाः

---

१ प. °दि° । २ क. ख. रथमेदि । ३ ग घ. पाव° । ४ । ५ घ. °प्राप्युद्ध्यु- -°पायाः । ६ ग. ङ. °गीता । दि° । ६ क. ग. मदा दि° । ७ ग. ङ. °ऽर्थः । घ° । ८ क. °प्रश्न° ।

कथिताः ॥ सकलश्रुत्यर्थसंग्रहात्मकत्वादस्यां संहितायामवश्यमादरो विधेय इत्याह—समस्तानामिति श्लोकशेषेण ॥ ३२ ॥

सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च ।
वंशानुचरितं चैव पुराणं पञ्चलक्षणम् ॥ ३३ ॥

नानाविधोपाख्यानप्रतिपादनपर्यवसिते पुराणे कः प्रसङ्गो वेदार्थस्य तत्राऽऽह—सर्गश्चेत्येकेन । ब्रह्मणस्तटस्थलक्षणत्वेन सृष्टिस्थितिप्रलया एव वेदे प्रधानं प्रमेयम् । "आत्मैवेदमग्र आसीत्" "स ऐक्षत" इति महासर्गः । "नेह नानाऽस्ति" इति महाप्रलयः । अन्यत्सर्वं स्थित्यवस्थाविलासः । इत्थमेवं पुराणेऽपि वंशमन्वन्तरवंशानुचरितानि स्थित्यवस्थाव एवेति ॥ ३३ ॥

यश्चतुर्वेदविद्विप्रः पुराणं वेत्ति नार्थतः ।
तं दृष्ट्वा भयमाप्नोति वेदो मां प्रतरिष्यति ॥ ३४ ॥

वेदार्थ एव चेत्पुराणे स वेदेनैव सिद्धः किं पुराणेनेति तत्राऽऽह—यश्चतुर्वेदविद्विप्र इति । तत्र स्थितस्याप्यर्थस्य तावतैव दुरधिगमत्वात्तदुपबृंहणाय पुराणमित्यर्थः । अनुपबृंहणे बाधमाह—तं दृष्ट्वेति । विप्लवस्य दुष्परिहरत्वं दर्शयितुं वेदे भयारोपः । प्रतरिष्यति विप्लावयिष्यतीति बिभेति । अतस्तं समुपबृंहयेदित्यन्वयः ॥ ३४ ॥

इतिहासपुराणाभ्यां वेदं समुपबृंहयेत् ।
वेदाः प्रमाणं प्रथमं स्वत एव ततः परम् ॥ ३५ ॥

सर्वथा पुराणादिकमपेक्षितं चेत्तेनैव पर्याप्तम् । किं वेदैः । न । वेदानां स्वतः प्रामाण्यात्तन्मूलतयैव पुराणादेः स्वरूपलाभादित्याह—वेदाः प्रमाणं प्रथममिति ॥ ३५ ॥

स्मृतयश्च पुराणानि भारतं मुनिपुङ्गवाः ।
अन्यान्यपि मुनिश्रेष्ठाः शास्त्राणि सुबहूनि च ॥ ३६ ॥

अन्यान्यपि । आर्षस्मृतिपुराणमूलानि । तदर्थं संग्रहशास्त्राणीत्यर्थः ॥ ३६ ॥

सर्वं वेदाविरोधेन प्रमाणं नान्यवर्त्मना ।
एक एव द्विधा वेदो वेदार्थश्चैक एव तु ॥ ३७ ॥

वेदाविरोधेन । 'विरोधे त्वनपेक्षं स्यादसति ह्यनुमानम्' इति हि जैमिनीयं

१ ङ. 'दविरोधेन । २ क. ग. घ. 'दश्च द्वौ ते ।

सूत्रम्। मूलभूतवेदानुमानेन स्मृत्यादेः प्रामाण्यं तद्विरोधे त्वनुमानमेव नोदेतीति मूलाभावादुपेक्षणीयम्। अथवा यावन्मूलोपलम्भं प्रत्यक्षश्रुतिविरुद्धस्मृत्याद्यर्थो नानुष्ठेय इति सूत्रार्थः। वेदाविरोधेन चेत्प्रामाण्यं तर्हि ऋग्वेदेऽनुदिततहोमं निन्दित्वोदितहोमो विधीयते—

"प्रातः प्रातरनृतं ते वदन्ति पुरोदयाज्जुह्वति येऽग्निहोत्रम्।
दिवाकीर्त्यमदिवाकीर्तयन्तः सूर्यो ज्योतिर्न तदा ज्योतिरेषाम्" इति॥

यजुर्वेदे मुदितहोमनिन्दयाऽनुदितहोमो विधीयते—"यथाऽतिथये प्रद्रुताय शून्यायावसथायाऽऽहार्यं हरन्ति तादृक्तद्यदुदिते जुहोति" इति। अतः परस्परविरोधाद्वेदद्वयमप्रमाणं स्यादित्यत्राऽऽह—एक एव द्विजा वेद इति। सर्वोऽप्येक एव वेदस्तत्कुतः परस्परविरोधः। नचैवं स्ववचनव्याघातः। षोडशिग्रहणाग्रहणवचनवद्विकल्पाभिप्रायत्वादित्यर्थः॥ ३७॥

तथाऽपि मुनिशार्दूलाः शाखाभेदेन भेदितः।
अनन्ता वै द्विजा वेदा वेदार्थोऽपि द्विजोत्तमाः॥ ३८॥

कथं तर्हि भेदव्यवहारः—

"अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः" इति स्मृतिः।

"वेदा वा एते अनन्ता वै वेदाः" इति च श्रुतिरित्यत आह—तथाऽपीति। एकस्याप्यपरिमितस्य वेदस्य केनचिदप्येकेन पुरुषेणाध्येतुं तदर्थस्य चानुष्ठातुमशक्यत्वादेकं वेदमृग्यजुःसामाथर्वभेदेन चतुर्धा विभज्य तत्रैकैकः पुनरैतरेयादिशाखाभेदेन भेदित इत्यर्थः॥ ३८॥

अनन्तो वेदवेद्यस्य शंकरस्य शिवस्य तु[१]।
मायया न स्वरूपेण द्विजा ह्यद्वयं भवम्॥ ३९॥

ननु वेदशाखा एव वेदसंख्याताः कथं तर्हि "एक एव रुद्रो न द्वितीयाय तस्थे" इति तैत्तिरीयकश्रुतिः। "अहमेकः प्रथममास वर्तामि च भविष्यामि च। नान्यः कश्चिन्मत्तो व्यतिरिक्तः" इत्यथर्वशिरसि वचनमित्यत आह—वेदवेद्यस्येति। मायया न स्वरूपेणेति। परमार्थतो ह्यद्वितीयो रुद्र इत्युक्तम्। अतस्तेनैव लीलया निर्मितस्य मायामयस्य न वास्तवेन तदद्वैतेन विरोध इत्यर्थः। नन्वेतादृशी लीला कचिदपि लोके न दृष्टचरीत्यत आह—द्विजा

१ ग. तद्भेद तद्°।

हा देवैर्भयमिति । " अह इत्यद्भुते खेदे " इत्यभिधानम् । अन्यत्राप्यद्भुत-मद्भुतस्यालंकारो न दूषणमित्यर्थः ॥ ३९ ॥

ब्रह्माणं मुनयः पूर्वं सृष्ट्वा तस्मै महेश्वरः ।
दत्तवानखिलान्वेदानात्मन्येव स्थितानिमान् ॥ ४० ॥

नन्वपौरुषेया वेदाः 'वाचा विरूपनित्यया' 'अनादिनिधना नित्या वागुत्सृष्टा स्वयंभुवा ' इति श्रुतिस्मृती इति ते कथं निर्मिताः कश्चैता एतावतीर्ग्रहीष्यति यस्य कृते निर्मितेत्याशङ्क्याह—ब्रह्माणं मुनयः पूर्वमिति । स्वयमेव लीलया सकलवेदग्रहणसमर्थं ब्रह्माणं निर्माय स्वात्मनि नित्यमवस्थिता एव वेदास्तस्मै दत्ता इत्यर्थः । न च नित्यसिद्धवेदसमर्पणे शिवस्योपाध्यायतुल्यता । उपाध्यायो हि स्वयमन्यतो लब्ध्वा शिष्यानध्यापयति । शिवस्तु नैवमन्यतोऽधीते स्वात्मनि नित्यमवस्थितानामेव तेषां ब्रह्मद्वारा संप्रदायं प्रवर्तयति । "यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै " इति स्थितानामेव वेदानां प्रदानश्रुतेः ॥ ४० ॥

ब्रह्मा सर्वजगत्कर्ता शिवस्य परमात्मनः ।
प्रसादादेव रुद्रस्य स्मृतीः सस्मार सुव्रताः ॥ ४१ ॥

स्मृतिपुराणादीनामपि तर्हि शिवेनैव प्रदाने वेदसाम्ये न वेदप्रामाण्यं तत्राऽऽह—ब्रह्मा सर्वजगत्कर्तेति । वेदे द्वौ भागौ कर्मभागो ज्ञानभागश्चेति । आद्यस्यार्थः स्मृतिरूपेण ब्रह्मणा शिवप्रसादेन व्याख्यातः । द्वितीयस्य तु विष्णुना व्यासरूपेणावतीर्य पुराणरूपेणेति स्मृतिपुराणानां वेदमूलता न स्वातन्त्र्यमित्यर्थः । यद्यपि स्मृतिष्वपि विद्यानिरूपणमस्ति तथाऽपि तत्प्रासङ्गिकं द्रव्यशुद्धिप्रसङ्गेन हि कथितम्—

" क्षेत्रज्ञस्येश्वरज्ञानाद्विशुद्धिः परमा मता " इति ।

चतुर्थाश्रमधर्मप्रसङ्गेन चौपनिषदतत्त्वनिरूपणं कृतमिति । पुराणानां तु विद्याप्राधान्यं प्रासङ्गिकं धर्मनिरूपणम् । पुराणेषु हि जगदुत्पत्तिस्थितिलयकारणत्वं शिवस्याभिमत्योत्पत्तिकारणत्वं सर्गेणोक्तम् । लयकारणत्वं च प्रतिसर्गेण । स्थितिकारणत्वं च वंशमन्वन्तरवंश्यानुचरितनिरूपणेन तत्प्रसङ्गाद्वाश्रमधर्मा आगता इति । अत एव धर्मविषये स्मृतिपुराणविप्रतिपत्तौ स्मृतीनां प्राबल्यं तत्र तासां तात्पर्यात् इति तत्त्वज्ञानविषये पुराणप्राबल्यमिति विवेकः ॥ ४१ ॥

१ क. निधनम् ।

विष्णुर्विश्वजगन्नाथो विश्वेशस्य शिवस्य तु ।
आज्ञया परया युक्तो व्यासो जज्ञे गुरुर्मम ॥ ४२ ॥

व्यासेन पुराणानां प्रणयनं प्रागुक्तं तस्य तु विष्णोरवतारत्वमिदानीमाह—विष्णुर्विश्वजगन्नाथ इति ॥ ४२ ॥

स पुनर्देवदेवस्य प्रसादादम्बिकापतेः ।
संक्षिप्य सकलान्वेदांश्चतुर्धा कृतवान्द्विजाः ॥ ४३ ॥

न केवलं वेदोपबृंहणाय पुराणप्रणयनम् । महतो वेदस्याल्पबुद्धिभिर्दुरवगाहत्वात्तच्छाखाविभागं कृत्वा संप्रदायप्रवर्तनमपि तेनैव कृतमित्याह—स पुनर्देवदेवस्येति ॥ ४३ ॥

ऋग्वेदः प्रथमः प्रोक्तो यजुर्वेदस्ततः परः ।
तृतीयः सामवेदाख्यश्चतुर्थोऽथर्व उच्यते ॥ ४४ ॥
एकविंशतिभेदेन ऋग्वेदो भेदितोऽमुना ।
यजुर्वेदो द्विजा एकशतभेदेन भेदितः ॥ ४५ ॥

अथर्वशब्दोऽकारान्तोऽप्यस्ति । 'अथर्वाय ज्येष्ठपुत्राय प्राह' इति प्रयोगाद्येन लोके प्राचुर्येण प्रोक्तत्वाद्वेदोऽप्यथर्वः । प्रोक्तार्थे वाऽणि कृते 'संज्ञापूर्वको विधिरनित्यः' इति वृद्धिप्रकृतिभावयोरभावः ॥ ४४ ॥ ४५ ॥

नवधा भेदितोऽथर्ववेदः साम सहस्रधा ।
व्यस्तवेदतया व्यास इति लोके श्रुतो मुनिः ४६ ॥

गीतिविशेषः साम । गीतिषु सामाख्येति हि जैमिनिः । तदाश्रयमन्त्रयोगाद्वेदोऽपि साम । उक्ते वेदविभागे व्यासनामनिर्वचनमेव प्रमाणमाह—व्यस्तवेदतयेति । वेदान्विभज्याऽऽसमन्ताच्छिष्येभ्यो व्यस्यतीति व्यासः । व्याङादावुपसर्गौ पचाद्यच् । व्यस्ता वेदाः शिवेनैव कर्त्रा महर्षिरूपेण निजेनैवावतारान्तरेण करणेनेति करणे वा घञ् ॥ ४६ ॥

---

१ ख °ऽत्रैव नगर° । २ ङ पुराणस्य प्रण° । ३ ख. दुर्वो वेद° । घ ङ °तोऽथर्वा वेद् ४ ङ. ख ग °ऽथसर्ती° ।

अयं साक्षान्महायोगी व्यासः सर्वज्ञ ईश्वरः ।
महाभारतमाश्चर्यं निर्ममे भगवान्मुनिः ॥ ४७ ॥

वेदार्थं द्रढयितुं साकल्येन चतुर्विधपुरुषार्थप्रकाशकस्य महाभारतस्य तेन च प्रणयनमाह—अयं साक्षान्महायोगीति । उक्तं हि—

" धर्मे चार्थे च कामे च मोक्षे च भरतर्षभ ।
यदिहास्ति तदन्यत्र यन्नेहास्ति न तत्क्वचित् " ॥ [1]

इत्थमेव हि महाभारतप्रणयनं स साक्षाद्विष्णोरवतार इत्यत्र गमकम् । यदाहुः—

" कृष्णद्वैपायनं व्यासं विद्धि नारायणं प्रभुम् ।[2]
[3]को ह्यन्यः पुण्डरीकाक्षान्महाभारतकृद्भवेत्" इति ॥४७॥

तस्य शिष्या महाभागाश्चत्वारो मुनिसत्तमाः ।
अभवन्स मुनिस्तेभ्यः पैलादिभ्योऽददाच्छ्रुतीः ॥४८॥

तेभ्योऽधीता श्रुतिः सर्वा साध्वी विप्राः सनातनी ।
तया वर्णाश्रमाचारः प्रवृत्तो वेदवित्तमाः ॥ ४९ ॥
पुराणानां प्रवक्तारं स मुनिर्मां न्ययोजयत् ।
तस्मादेव मुनिश्रेष्ठाः पुराणं प्रवदाम्यहम् ॥ ५० ॥

पैलादिभ्यः पैलवैशम्पायनजैमिनिसुमन्तुभ्यश्चतुर्भ्यो वेदान्दत्त्वा ते यथा तत्प्रवर्तने नियुक्ता एवं पुराणानि मह्यं दत्त्वाऽहं नियुक्त इति तदाज्ञयैवेदं मया व्याक्रियत इत्यर्थः ॥ ४८ ॥ ४९ ॥ ५० ॥

श्रद्धया परया युक्ताः शृणुध्वं मुनिपुङ्गवाः ।
इति श्रुत्वा मुनिश्रेष्ठा नैमिषीयाः सनातनाः ॥ ५१ ॥

शृणुध्वमिति व्यत्ययेनाऽऽत्मनेपदम् ॥ ५१ ॥

प्रणम्य सूतमव्यग्रं पूजयामासुरादरात् ।
सोऽपि सर्वजगद्धर्तुं शंकरं परमेश्वरम् ॥ ५२ ॥
अम्बिकापतिमीशानमनन्तानन्दचिद्घनम् ।
ध्यात्वा तु सुचिरं कालं सकरां परवशोऽभवत् ॥५३॥

---

१ क. ग. ङ. सार्थेन्द्र र्° । २ ङ. तस्येति स° । ३ ख. हस्तेन्य ।

प्रणम्येति । "नी "ष्ट्वा दयार्हमिति दर्शननिबन्धना पूजा । इह तु श्रवणारम्भनिबन्धने प्रणामपूजे मुनीनाम् । इत्यमेवं पृष्टो मुनिश्रेष्ठैरित्यत्र सूतेन शिवस्य प्रणिधानं चाक्षुषदर्शनार्थम् । इह तु प्रणिधानं पुराणारम्भादेति । सर्वजगद्धेतुमिति जगतामुपादानरूपेण । शंकरं परमेश्वरमिति निमित्तरूपेण । अम्बिकापतिमिति लीलावताररूपेणानन्तानन्दचिद्घनमिति निष्कलरूपेण प्रणिधानमिति ॥ ५२ ॥ ५३ ॥

नमः सोमाय रुद्राय शंकराय महात्मने ।

ब्रह्मविष्णुसुरेन्द्राणां ध्यानगम्याय शूलिने ॥ ५४ ॥

भक्तिपारवश्यादेव तन्मुखादप्रयत्नेनेयमुद्गता स्तुतिः । नमः सोमायेति । सोमश्चन्द्रः शिवस्य सप्तमी मूर्तिः । इदं च पृथिव्यादिमूर्त्यन्तरसप्तकस्याप्युपलक्षणम् । उमया वा सहितः सोमः । रुद्रमनिष्टं संसारं द्रावयतीति रुद्रः । उक्तं च वायवीयसंहितायाम्—

"रुद्दुःखं दुःखहेतुं च विद्रावयति नः प्रभुः ।
रुद्र इत्युच्यते तस्माच्छिवः परमकारणम्" ॥ इति ।

न केवलमनिष्टनिवृत्ताविष्टप्राप्तावपि स एव कारणमित्याह—शंकरायेति । भक्तिव्यतिरिक्तैरुपायसहस्रैरप्यगम्यत्वकथनाय तस्य निरतिशयं प्रभावमाह—महात्मन इति । तदुपपादनाय भक्तिविरहे प्रबलानामपि प्रयत्नास्तत्र कुण्ठिता इत्याह—ब्रह्मविष्णुसुरेन्द्राणामिति । उक्तं हि तलवकारोपनिषदि " ब्रह्म ह देवेभ्यो विजिग्ये " इत्यारभ्य परशिवानुग्रहेणैव प्राप्तविजया इन्द्रादयः स्वमाहात्म्यनिबन्धनमेव तं विजयं मेनिरे । शिवश्च तेषां विनाशहेतुं मदमपनेतुं दूरे दिव्येन ज्योतिर्मयेन रूपेणाऽऽविरासीत्किमिदं लोकोत्तरं रूपमिति विमृशन्तोऽपि ते तं नाजानिषुः । तदाह तत्र व्यजानत किमेतद्यक्षमिति यक्षं यजनीयं पूजार्हमिति तत्तज्जिज्ञासया गतयोरग्निवाय्वोः प्रतिज्ञयोः स्वयं गतायेन्द्राय देवो दर्शनमपि न प्रादात् । ततो व्यपगतमदाय निरतिशयभक्तियुक्ताय तत्रैव हैमवतीरूपेणावतीर्य व्याहार्षीत्परशिवोऽयं भवतां विनाशहेतुं मदमपनेतुमनुग्रहेणाऽऽविरासीदिति । तदिदमुक्तं ध्यानगम्यायेति ॥ ५४ ॥

भक्तिगम्याय भक्तानां विदुषामात्मरूपिणे ।

स्वानुभूतिप्रसिद्धाय नमस्ते सर्वसाक्षिणे ॥ ५५ ॥

१ क. ख. ग. 'हेतुं च' । २ ग. 'करण इत' । ३ छ. मत्वं ।

इति श्रीस्कन्दपुराणे श्रीसूतसंहितायां शिवमाहात्म्यखण्डे
ग्रन्थावतारकथनं नाम प्रथमोऽध्यायः ॥ १ ॥

भक्तिगम्यायेति भक्तेः फलभूतं ज्ञानयोगमाह—चिद्रूपायेति । चिद्रूपो निजस्वरूपज्ञानिनः स्वात्मानमेव ज्ञापयतीत्यर्थः । इत्थंभूतस्य शिवस्य स्वरूपमाह—स्वानुभूतिप्रसिद्धायेति । स्वयं स्वतश्च एव भासते न प्रकाशान्तरेण । स्वातिरिक्तस्य च सर्वस्य भाने स्वयमेव हेतुर्भवति । " न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः । तमेव भान्तमनुभाति सर्वम् " इति च श्रुतेरित्यर्थः ॥ ५५ ॥

इति श्रीमत्काशीविलासक्रियाशक्तिपरमभक्तश्रीमत्त्र्यम्बकपादाब्जसेवापरायणेनोपनिषन्मार्गप्रवर्तकेन माधवाचार्येण विरचितायां श्रीसूतसंहितातात्पर्यदीपिकायां शिवमाहात्म्यखण्डे ग्रन्थावतारकथनं नाम प्रथमोऽध्यायः ॥ १ ॥

---

## द्वितीयोऽध्यायः ।

---

नैमिषीया ऊचुः—

सर्वं जगदिदं विद्वन्विभक्तं केन हेतुना ।
उत्पन्नं केनचित्तस्मादनित्यं च ततः प्रभुः ॥ १ ॥

अथ पाशुपतव्रतपूर्वकं देवोपदेशादनुभवपर्यन्तो बोधो भवतीति वक्तुं द्वितीयोऽध्याय आरभ्यते । तत्रास्ति किंचिज्जगतः कारणमिति सामान्यतो जानन्त इदं तदिति विशेषेणाजानन्तो मुनयस्तज्जिज्ञासया सूतं पप्रच्छुः—सर्वं जगदिदं विद्वन्निति । प्रश्नोपपत्तये सामान्यतो ज्ञानहेतुमाह—उत्पन्नं केनचिदिति । अनित्यत्वादेव जगदुत्पत्तिमदुत्पत्तिश्च न विना कारणेन । अतोऽस्ति किंचित्कारणमिति सामान्यतो ज्ञातमित्यर्थः । अधुना विशेषेण ज्ञाने कारणमाह—ततः प्रभुरिति ॥ १ ॥

---

१ क. ख. 'च सन्ति' । २ ङ. जगदुत्पत्तिश्च । ३ ख. कारणत्वेन ।

अज्ञत्वान्नैव हेतुः स्यान्न च प्रकृतिरेव च ।
अतः सर्वजगद्धेतुरन्य एव तपोधन ॥ २ ॥
तमस्माकं महाभाग ब्रूहि पुण्यवतां वर ।

अज्ञत्वादिति । जगत उपादानादिज्ञानमन्तरेण तत्कर्तृत्वासिद्धेर्जीवस्य परिच्छिन्नज्ञानत्वात्प्रकृतेश्च जडत्वेन तदभावाच्च तत्कारणतोपपत्तिरित्यर्थः । मलमायाकर्मलक्षणपाशत्रयबद्धा जीवाः पशवः । तत्र मलपाशमात्रबद्धा विज्ञानकलाः । ते द्विविधाः । समाप्तकलुषा असमाप्तकलुषाश्च । आद्या विद्येशाः । द्वितीयाः सप्तकोटिमहामन्त्रात्मकाः । मलकर्मलक्षणपाशद्वयबद्धाः प्रलयकलाः । तेऽपि मलकर्मणोः परिपाकभावाभावाभ्यां द्विविधाः । येषां तत्परिपाको नास्ति ते कर्मवशान्नानायोनिषु जायन्ते । येषां तु मलकर्मपरिपाकोऽस्ति तेषु केषुचिदीश्वरानुग्रहाद्भुवनपतयो भवन्ति । पाशत्रयबद्धास्तु कलादियोगात्सकलाः । तत्राष्टादशाधिकशतसंख्याकाः शिवानुग्रहान्मन्त्रेश्वरा भवन्ति । तत्र शतरुद्राः शतमण्डलिनोऽष्टौ क्रोधादयोऽष्टौ श्रीकण्ठवीरेश्वरौ चेति । तद्व्यतिरिक्तानां मध्ये येषां मलत्रयपरिपाकस्तानाचार्यरूपेण शिव एव दीक्षयाऽनुगृह्णाति । अपरिपक्वमलांस्तु मलपरिपाकार्थं भोगाय नानायोनिषु विनियुङ्क्ते । एते सर्वेऽपि पशवः सत्यपि ज्ञानोत्कर्षतरतमभावे सार्वज्ञ्याभावान्न जगतः कर्तारः । प्रकृतेस्तु जडत्वात्तद्दूरत एव कर्तृत्वम् । अतोऽन्येनैव केनचित्सर्वज्ञेन जगतः कर्त्रा भवितव्यम् ॥ २ ॥

सूत उवाच—

पुरा विष्ण्वादयो देवाः सर्वे संभूय कारणम् ॥ ३ ॥
विचार्य जगतो विप्राः संशयाविष्टचेतसः ।
अतीव सुखदं शुद्धं रौद्रं लोकं समागमन् ॥ ४ ॥

कोऽसाविति मुनीनां जिज्ञासा । अत्रोत्तरमथर्वशिरसि स्थितयाऽऽख्यायिकयैव सूत आह—पुरा विष्ण्वादयो देवा इति । अतीव सुखदं शुद्धमिति । तथा च श्रुतिः—"देवा ह वै स्वर्गं लोकमगमन्" इति । तदाहुः—

"यन्न दुःखेन संभिन्नं न च ग्रस्तमनन्तरम् ।
अभिलाषोपनीतं च सुखं स्वर्गपदास्पदम्" इति ॥ ३ ॥ ४ ॥

१ क. °ज्ञानत्वात्° । २ ग. °र्भविता° । ३ ग. °म-देश भ° । ४ क-ग. ग. कोऽसावाद्यो° ।

तेषां मध्ये महादेवः संसारद्रावको हरः ।
रुद्रः परमकारुण्यः स्वयमाविरभूद्द्विजाः ॥ ५ ॥
अदृष्टपूर्वं तं दृष्ट्वा देवा विष्णुपुरोगमाः ।
प्रणिपत्य महादेवमपृच्छन्को भवानिति ॥ ६ ॥

परमकारुण्यः करुणैव कारुण्यम् । 'चतुर्वर्णादिभ्यः स्वार्थे' इति ष्यञ् । तमाविर्भूतं रुद्रं देवाः को भवानित्यपृच्छन् । तदाह श्रुतिः—"ते देवा रुद्रमपृच्छन्को भवानिति" इति ॥ ५ ॥ ६ ॥

सोऽब्रवीद्भगवान्रुद्रः पशूनां पतिरीश्वरः ।
सर्वज्ञः सर्वतत्त्वानां तत्त्वभूतः सनातनः ॥ ७ ॥

पशूनां पतिः । उक्तलक्षणानां त्रिविधानां पशूनामनुग्रहेण पालनात्पतिः । उक्तं हि मृगेन्द्रसंहितायाम्—

"अथानादिमलापेतः सर्वकृत्सर्वदृक् शिवः ।
पूर्वं व्यत्यासितस्याणोः पाशजालमपोहति" ॥ इति ।

पाशानां स्वव्यापारे सामर्थ्याधानात्पशूनां भोगापवर्गप्रदानाच्च तेषामीष्ट इतीश्वरः । यथाऽऽहुरागमिकाः—

"भुक्तिं मुक्तिमणूनां स्वव्यापारे समर्थनाधानम् ।
जडवर्गस्य विधत्ते सर्वानुग्राहकः शंभुः" ॥ इति ।

सर्वतत्त्वानां तत्त्वभूत इति । आमलयमवस्थितानि तत्त्वानि मलयेऽप्यवस्थानात्तु सनातनः शिवः सर्वतत्त्वानां तत्त्वभूतः । तदुक्तम्—

"आमलयं यत्तिष्ठति सर्वेषां भोगदायि भूतानाम् ।
तत्तत्त्वमिति प्रोक्तं न शरीरघटादि तत्त्वमतः" ॥ इति ॥ ७ ॥

अहमेको जगद्धातुरासं प्रथममीश्वरः ।
वर्तामि च भविष्यामि न मत्तोऽन्योऽस्ति कश्चन ॥ ८ ॥

रुद्रस्योत्तरम्—अहमेक इति । जगद्धातुर्ब्रह्मणः सकाशादपि प्रथममहमासं वर्तामि भविष्यामि च । एकैककालकृतपरिच्छेदविरहाभिप्रायं ननु कालत्रयसंबन्धाभिप्रायमहमेक इति न मत्तोऽन्य इति च । स्वातिरिक्तस्य कालस्यापि निरासात् । अत एव नेक इत्यापि द्वित्वादिसंख्यासंबन्धनिरासो विवक्षितो

१ ङ. त । २ घ 'द्रमाा' । ३ ग घ. 'मद्धेतु' । ४ ग. 'ह्मणोऽपि । ५ ग. 'मि च भ'

नैकत्वसंबन्धः । यदाह श्रुतिः—“ अहमेकः प्रथममासं वर्तामि च भविष्यामि च नान्यः कश्चिन्मत्तो व्यतिरिक्तः ” इति ॥ ८ ॥

मन्मायाशक्तिसंक्लृप्तं जगत्सर्वं चराचरम् ।
साऽपि मत्तः पृथग्विप्रा नास्त्येव परमार्थतः ॥ ९ ॥

कथं तर्हि लोकस्य चराचरजगद्गोचरोऽनुभव इत्यत आह—मन्मायाशक्तिसंक्लृप्तमिति । तर्हि तथैव मायया सद्वितीयत्वं चेन्न । तस्या अपि परमार्थतः सत्त्वाभावादित्याह—साऽपीति । अयमभिसंधिः—यदनुविद्धानि हि यान्यवभासन्ते तत्र तानि परिकल्पितानि यथाऽयं सर्पोऽयं दण्ड इयं धारेति रज्ज्वा इदमंशेनानुविद्धतया भासमानाः सर्पदण्डधारादयस्तत्र परिकल्पिताः । सदनुविद्धं चेदं सकलं जगदवभासते सन्घटः सन्पट इति । अतः सन्मात्ररूपे परशिवे विश्वं परिकल्पितम् । नच तस्य सन्मात्रस्यानवभासने तदनुवेधेन कल्पितावभाससंभव इति सदैव तस्य प्रकाशोऽभ्युपगन्तव्यः । नच तस्य प्रकाशकान्तरं किंचिदस्ति । स्वव्यतिरिक्तस्य सर्वस्य कल्पिततया जडत्वात् । अतः स्वप्रकाशतया तदेव चिद्रूपम् । तथा च श्रूयते—“सद्धीदं सर्वं सत्सदिति । चिद्धीदं सर्वं काशते काशते च ” इति । तस्य च स्वात्मनोऽनतिरेकादात्मनः परमेश्वरपदत्वेन परमानन्दरूपत्वात् । श्रुतिभिश्च परानन्दैकरसत्वं प्रतिपादितम् । इत्थं सच्चिदानन्दैकरसः परमात्मा मन्मायेत्यत्र मच्छब्देनोच्यते । कल्पितस्य जगतोऽनाद्यनन्तत्वे सर्वदोपलम्भप्रसङ्गात्कादाचित्कत्वम् । कादाचित्कस्य च कारणापेक्षत्वात्तदनुरूपं किंचित्कल्पितमुपादानमङ्गीकर्तव्यम् । सत्योपादानत्वे कार्यस्यापि कल्पितत्वव्याघातात्तस्य च कारणस्याऽऽदिमत्त्वे तादृक्कारणान्तरकल्पनानवस्थापातादनाद्येव तत्स्वीकर्तव्यं सेयमुच्यते मायेति । सा च सत्त्वरजस्तमोगुणात्मिकाऽपि न सांख्याभिमतप्रधानवत्स्वतन्त्रा किंत्वीश्वरस्य परतन्त्रत्वाशयेन शक्तिरित्युक्तम् । शक्तिरिति परतन्त्रतामाहेति विवरणाचार्याः । ते च गुणाः परस्पराभिभवात्मकाः । उक्तं हि गीतासु—

“ रजस्तमश्चाभिभूय सत्त्वं भवति भारत ।
रजः सत्त्वं तमश्चैव तमः सत्त्वं रजस्तथा ” ॥ इति ।

तेन सा माया त्रेधा भवति । रजस्तमसोरत्यन्ताभिभवेन विशुद्धसत्त्वात्मिका तावदेका । ईषदुद्भूताभ्यां रजस्तमोभ्यां मलिनसत्त्वात्मिका द्वितीया ।

१ क. ख. ग. °भासेत° । २ ख. °कोऽप्यनि° ३ क. ख. ग. °त्वनश्च पे° । ४ ङ. °सङ्गात्कादा° । ५ ग. °स्थाव्याघाता° । ६ क. तेन मा° ।

तमसोऽत्यन्तमुद्रेकेणात्यन्ताभिभूतयोः सत्त्वरजसोरसत्प्रायत्वात्केवलतमोमयी तृतीयेति । तत्र मन्मायेत्यत्र मच्छब्दोपलक्षितं मायातीतं सच्चिदानन्दैकरसं परशिवस्वरूपम् । विशुद्धसत्त्वप्रधाना तु माया मायिनं न वशी करोति । किंतु तस्य वशे वर्तते । तथाच स्वाधीनमायोपाधिविशिष्टं तदेव परशिवस्वरूपमिह मच्छब्देनाभिधीयमानमीश्वरो जगत्कर्ता सर्वज्ञो भोगप्रद इत्यादिशब्दैरुच्यते । उक्तं हि व्यासेन—“फलमत उपपत्तेः” इति । मलिनसत्त्वप्रधाना तु मायिनं वशी करोति । तद्वशीकृतं च चैतन्यं जीवः संसारी कर्ता भोक्तेत्यादिभिरुच्यते । केवलतमोमयी तु स्वाश्रयमसत्प्रायं कृत्वा भूतभौतिकजगदात्मकभोग्यरूपेण च विवर्तते । तत्र मच्छब्देनाभिहितो य ईश्वरो भोगप्रदस्तत्परतन्त्रा माया मन्मायाशक्तिरित्युक्ता तथैव द्वितीयां दशां मायोपाधिभूतया विशिष्टा भोक्तारो जीवशब्देनोक्ताः । तथैव तृतीयां दशां मायोपाधिभूतया विशिष्टं भोग्यं जडं जगच्छब्दैरभिधीयते । इत्थं भोगप्रदभोक्तृभोग्यविभागकल्पिकाया मायायाः कल्पितत्वान्मायातीतपरशिवव्यतिरेकेण परमार्थतो न भावः इति । तदुक्तं श्वेताश्वतरोपनिषदि—

“ भोक्ता भोग्यं प्रेरितारं च मत्वा सर्वं प्रोक्तं त्रिविधं ब्रह्ममेतत् ” इति ।

यावद्ब्रह्म न जानाति तावत्प्रेरयिता भोगप्रद ईश्वरः । भोक्ता जीवः । भोग्यं जगदिति विभागः । ब्रह्म गत्वा तु त्रिविधमेतत्त्रिविधं ब्रह्मैव भवति । अतो मायाशक्तिरीश्वरलक्षणेत्यर्थः । आगमिका अप्याहुः—

“शिवो दाता शिवो भोक्ता शिवः सर्वमिदं जगत् ।
शिवो यजति यज्ञैश्च यः शिवः सोऽहमेव हि ”॥ इति ।

मायातीतः शिव एव स्वमायया भोगदाता भोक्ता भोग्यं च भवति । यदा तु भोक्ता शिवं साक्षात्कुरुते तदा विभागहेतुभूताया मायाया नाशात्स्वयं शिवरूपतामेव प्रतिपद्यत इत्यर्थः । अयमर्थः सर्वोऽप्यग्रे प्रपञ्चेन भविष्यति ॥ ९ ॥

मामेवं वेदवाक्येभ्यो ज्ञानात्याचार्यपूर्वकम् ।
यः पशुः स विमुच्येत ज्ञानाद्वेदान्तवाक्यजात् ॥ १० ॥

उक्तमायापरिहारेण शिवस्वरूपसाक्षात्कारोपायमाह—मामेवमिति । वेदवाक्येभ्य इति । तत्त्वमसीत्यादिभ्यः । स एव मुख्य उपायः । “ तं त्वौपनिषदम्” इति श्रुतेः । आचार्यपूर्वकमिति । “आचार्यवान्पुरुषो वेद” इति श्रुतेः । ‘यो जाना-

१ दिशब्दैरु° । २ क. ख. °स्त्वभोग्य° । ३ क. ख. °जीवाख्यशब्दे° । ४ ङ. °जगच्छब्दै° । ५ ग. भ्रान्ति । ६ ङ. °ह्म चैतत् । ७ ङ. मतीतं शि° । ८ ख. मामेव वेद° । ९ घ. °न्तशास्त्रजा° । १० क. ग. घ. एव हि मु° ।

ति सोऽज्ञानान्मुच्यते' इति । 'ब्रह्म वेद ब्रह्मैव भवति' इति । 'तमेव विदित्वाऽति मृत्युमेति' । 'तमेवं विद्वानमृत इह भवति नान्यः पन्था विद्यतेऽयनाय' इति च श्रुतेः ॥ १० ॥

इत्युक्त्वा भगवान्रुद्रः स्वं पूर्णं रूपमाविशत् ।
नापश्यन्त ततो रुद्रं देवा विष्णुपुरोगमाः ॥ ११ ॥

इत्थं गुरूपदेशादेव ज्ञातव्यं स्वरूपमुपदिश्य तत्साक्षात्कारसाधनानां पाशुपतव्रतप्रणवपञ्चाक्षरजपादीनां श्रावित एव देवैरनुष्ठातुं शक्यत्वेन कर्तव्याभावाच्छिवः स्वमहिम्नि स्थितोऽभवदित्याह—इत्युक्त्वा भगवान्रुद्र इति ॥ ११ ॥

अथर्वशिरसा देवमस्तुवंश्चोर्ध्वबाहवः ।
अन्यैर्नानाविधैः सूक्तैः श्रीमत्पञ्चाक्षरेण च ॥ १२ ॥
पुनः साक्षाच्छिवज्ञानसिद्ध्यर्थं मुनिपुङ्गवाः ।
अग्निहोत्रसमुत्पन्नं भस्माऽऽदायाऽऽदरेण तु ॥ १३ ॥
निधाय पात्रे शुद्धे तत्पादौ प्रक्षाल्य वारिणा ।
द्विराचम्य मुनिश्रेष्ठाः सपवित्राः समाहिताः ॥ १४ ॥

उपदेशपरितुष्टास्तुष्टुवुरित्याह—अथर्वशिरसा देवमिति । यो वै रुद्र इत्यादिनेत्यर्थः । तदाह श्रुतिः—ततो देवा रुद्रं नापश्यंस्ते देवा रुद्रं ध्यायन्ति । ततो देवा ऊर्ध्वबाहवः स्तुवन्ति यो वै रुद्रः स भगवानित्यादि । अलभ्यलाभनिबन्धनस्य हर्षोत्कर्षस्य लिङ्गमूर्ध्वबाहुत्वम् । अन्यैर्नानाविधैः सूक्तैरिति । शतरुद्रियादिभिः ॥ १२ ॥ १३ ॥ १४ ॥

ओमापः सर्वमित्येतन्मन्त्रमुच्चार्य भक्तितः ।
ध्यात्वा विष्णुं जलाध्यक्षं गृहीत्वा भस्म वारिणा ॥ १५ ॥

ओमापः सर्वमिति । 'ओमापो ज्योती रसोऽमृतं ब्रह्म भूर्भुवः स्वरोम्' इत्येतन्मन्त्रमित्यर्थः । सर्वशब्देनात्र द्वारा ज्योतिरादयः शब्दा गृह्यन्ते ॥ १५ ॥

विमृज्य मन्त्रैर्जाबालैरग्निरित्यादिसप्तभिः ।
समाहितधियः शुद्धाः शिवं ध्यात्वा शिवामपि ॥ १६ ॥

अग्निरित्यादीति । सप्तभिरिति शब्दपरो निर्देशः । आदिशब्देन जलमिति स्थलमित्यादयो गृह्यन्ते ॥ १६ ॥

---

१ ख. भूर्भुवोम् । २ क. ए. 'नि भस्म स्व' ।

समुद्धूल्य मुनिश्रेष्ठा आपादतलमस्तकम् ।
सितेन भस्मना तेन ब्रह्मभूतेन भावनात् ॥ १७ ॥
ललाटे हृदये कुक्षौ दोर्द्वंद्वे च सुरोत्तमाः ।
त्रिपुण्ड्रधारणं कृत्वा ब्रह्मविष्णुशिवात्मकम् ॥ १८ ॥
एवं कृत्वा व्रतं देवा अथर्वशिरसि स्थितम् ।
शान्ता दान्ता विरक्ताश्च त्यक्त्वा कर्माणि सुव्रताः ॥ १९ ॥

ब्रह्मभूतेनेति । ब्रह्मत्वेन भाव्यमानतया ब्रह्मीभूतेनेत्यर्थः ॥१७॥१८॥१९॥

वालाग्रमात्रं विश्वेशं जातवेदस्वरूपिणम् ।
हृत्पद्मकर्णिकामध्ये ध्यात्वा वेदविदां वराः ॥ २० ॥
सर्वज्ञं सर्वकर्तारं समस्ताधारमद्भुतम् ।
प्रणवेनैव मन्त्रेण पूजयामासुरीश्वरम् ॥ २१ ॥

वालाग्रमात्रमिति । अतिसूक्ष्मे दहराकाशे उपलभ्यमानत्वादीशस्य वालाग्रमात्रत्वम् । जातमाविर्भूतं वेदो ज्ञानं तदेव स्वरूपं यद्वन्तम् । यद्वा चरमसाक्षात्कारवृत्त्यभिव्यक्तेः सकारणं संसारं दहतीति जातवेदा इत्यग्नित्वारोपः । श्रूयते हि—'वालाग्रमात्रं हृदयस्य मध्ये विश्वं देवं जातवेदं वरेण्यम्' इति॥२०॥२१॥

अथ तेषां प्रसादार्थं पशूनां पतिरीश्वरः ।
उमार्धविग्रहः श्रीमान्सोमार्धकृतशेखरः ॥ २२ ॥
नीलकण्ठो निराधारो निर्मलो निरुपप्लवः ।
ब्रह्मविष्णुमहेशानैरुपास्यः परमेश्वरः ॥ २३ ॥

अथ तेषामिति । प्रसादो नैर्मल्यं संस्कारातिशयानिरुक्तिस्तदर्थमित्यर्थः । ननु ब्रह्मादिभ्यः पूर्वमपि देवैः शिवः साक्षात्कृतः सन्नुपदिदेशेत्युक्तम् । ब्रह्मादिभिः को विशेषो जात इति । न । सकले रूपे तत्र साक्षात्कृतम् । निष्कलं तु शिवेनोपदिष्टं सन्छब्दतः परोक्षतयैव ज्ञातम् । अधुना तु ब्रह्मादिभिः प्रतिबन्धकदुरितक्षयात्पूर्वमपरोक्षतया ज्ञातं तदेव निष्कलं तत्त्वं प्रत्यक्षतोऽपश्यन्निति विशेषः । नन्वत्राप्युमार्धविग्रहः सोमार्धकृतशेखर इति सकलमेव रूपमुच्यते । न । यः प्राग्दृष्टः सकल उमार्धविग्रहादिरूप इत्यनूद्य स एव निराधारत्वनिर्मलत्वादिना

१ क. समुद्धृत्य ।

महाकायो महाग्रीवो महाबाहुर्महोदरः ।
उद्दालको महासेन आर्त आमलकप्रियः ॥ ११ ॥
एकपादो द्विपादश्च त्रिपादः पद्मनायकः ।
उग्रवीर्यो महावीर्य उत्तमोऽनुत्तमः पटुः ॥ १२ ॥
पण्डितः करुणः कालः कैवल्यश्च कलाधरः ।
कल्पान्तः कङ्कणः कण्वः कालः कालाग्निरुद्रकः ॥ १३ ॥
श्वेतबाहुर्महाप्राज्ञः श्वेताश्वतरसंज्ञकः ।
एषां शिष्याः प्रशिष्याश्च पाशविच्छेदने रताः ॥ १४ ॥
विचार्यमाणा वेदार्थं विषण्णा विवशा भृशम् ।
समागम्य समाधिस्थं दण्डवत्प्रणिपत्य च ॥ १५ ॥

ज्ञातव्यं वस्तु प्रथमखण्डेनोपदिश्य ज्ञानोपायं वक्तुं द्वितीयखण्डमारभते— कैलासेत्यादिना । कैलासेत्यारभ्य मुनय ऊचुरित्येतदन्तं व्यासवाक्यम् ॥१॥ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥१३॥ ॥ १४ ॥ १५ ॥

स्तोत्रैः स्तुत्वा महात्मानं पप्रच्छुः पण्डितोत्तमाः ।

मुनय ऊचुः—

भवता कथितं सर्वं संक्षेपाद्विस्तरेण च ॥ १६ ॥
इदानीं श्रोतुमिच्छामो ज्ञानयोगं सहेतुकम् ।
साक्षाद्विष्णोर्जगन्नाथात्कृष्णद्वैपायनाद्गुरोः ॥ १७ ॥
अवाप्तज्ञानयोगस्त्वं न वेत्ता त्वामृते भुवि ।
तस्मात्कारुण्यतोऽस्माकं संक्षेपाद्वक्तुमर्हसि ॥ १८ ॥
इति पृष्टो मुनिश्रेष्ठैः सूतः पौराणिकः प्रभुः ।
साक्षात्सर्वेश्वरं साम्बं संसारामयभेषजम् ॥ १९ ॥

---

१ ग. घ. °रुयते । २ ख. °विवन्दं । ३ ख. °वातो ज्ञा° । ४ घ. °रभय° ।

सर्वज्ञं सर्वगं शर्वं सर्वभूतहिते रतम् ।
व्याघ्रचर्माम्बरधरं व्याख्यानैकरतं विभुम् ॥ २० ॥
चतुर्भुजं शरच्चन्द्रचन्द्रिकाधवलाकृतिम् ।
गङ्गाधरं विरूपाक्षं चन्द्रमौलिं जटाधरम् ॥ २१ ॥
नीलग्रीवं चिरं स्मृत्वा व्यासमप्यमितौजसम् ।
प्रहृष्टः परया भक्त्या परिपूर्णमनोरथः ॥ २२ ॥
लौकिकैर्वैदिकैः स्तोत्रैः स्तुत्वा सम्यक्समाहितः ।
वक्तुमारभते सर्वं प्रणिपत्य महेश्वरम् ॥ २३ ॥

संक्षेपविस्तराभ्यामुपदिष्टस्यापि तत्त्वस्यानादिभवपरम्परोपात्तदुरितोपहतचित्तैर्दुरधिगमत्वाद्दुरितप्रक्षयद्वारा तेषामपि तदधिगमे क उपाय इति मुनयो जिज्ञासन्ते । भवता कथितमिति । योग उपायः । सोपायं ज्ञानसाधनं शुश्रूषामह इत्यर्थः ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ ॥ २२ ॥ २३ ॥

सूत उवाच—

शृणुध्वं मुनयः सर्वे भाग्यवन्तः समाहिताः ।
एतदेव पुराऽपृच्छद्गिरां नाथो महेश्वरम् ॥ २४ ॥

गिरां नाथो बृहस्पतिः । सकललोकहितायावश्यमष्टव्यमर्थमसौ बृहस्पतिः पृच्छति ॥ २४ ॥

देवोऽपि देवीमालोक्य करुणाविष्टचेतसा ।
प्राह गम्भीरया वाचा गुरवे मुनिपुंगवाः ॥ २५ ॥

आलोक्येति । देव्यालोकनाभिप्रायः ॥ २५ ॥

देव्या अङ्के समासीनः स्कन्दोऽपि श्रुतवांस्तदा ।
स्कन्दाद्वसिष्ठः संप्राप्तः पूर्वजन्मतपोबलात् ॥ २६ ॥
वसिष्ठाद्व्यवाप्तशक्तिः शक्तेः प्राप्तः पराशरः ।
पराशरान्मुनिश्रेष्ठो भगवान्व्याससंज्ञितः ॥ २७ ॥

---

१ ङ. च. सर्वं । २ च. 'देवता' । ३ ङ. ढ. 'भ्रष्टव्य'।

तदहं श्रुतवान्व्यासाज्जन्मान्तरतपोबलात् ।
वक्ष्ये वेदविदामद्य युष्माकं तद्यथाश्रुतम् ॥ २८ ॥

इति श्रीस्कन्दपुराणे सूतसंहितायां ज्ञानयोग-
खण्डे ज्ञानयोगसंप्रदायपरम्पराकथनं
नाम प्रथमोऽध्यायः ॥ १ ॥

वक्ष्यमाणोपाये समाश्वासजननाय शिवादिवक्तृपरम्परोपन्यासः ॥ २६ ॥ ॥ २७ ॥ २८ ॥

इति श्रीसूतसंहिताटीकायां ज्ञानयोगखण्डे ज्ञानयोगसंप्रदाय-
परम्पराकथनं नाम प्रथमोऽध्यायः ॥ १ ॥

---

ईश्वर उवाच—

अवाच्यमेतद्विज्ञानमतिगुह्यमनुत्तमम् ।
आम्नायान्तैकसंसिद्धमशेषक्लेशनाशनम् ॥ १ ॥

सोपायज्ञानयोगे श्रद्धावत एवाधिकारो नेतरस्य । उक्तं हि—

" अश्रद्धया हुतं दत्तं तपस्तप्तं कृतं च यत् ।
असदित्युच्यते पार्थ न च तत्प्रेत्य नो इह " इति ॥

अतस्तत्र ज्ञाने श्रद्धातिशयजननाय स्वरूपतः फलतश्च तस्य निरतिशयमुत्कर्षमाह—अवाच्यमित्यादिभिः । अशेषक्लेशनिबर्हणत्वेन नित्यनिरतिशयानन्दप्रापकत्वेन चात्यन्तमुत्तमत्वादतिगुह्यमतिरहस्यमिदं ज्ञानं यत्र तत्रानधिकारिणि न वक्तव्यम् । न विद्यामूसरे वपेदित्यर्थः । तत्र च ज्ञाने त्रिविधा अधिकारिणः । विशुद्धसत्त्वाः समाहितचेतस उत्तमाः । तेषां वेदान्तश्रवणमात्रमेवोपायस्तदाह—आम्नायान्तैकसंसिद्धमिति । वक्ष्यति च सप्तमाध्यायावसाने—

' सर्वदा सर्वमुत्सृज्य वेदान्तश्रवणं कुरु ' इति ॥ १ ॥

अनन्तानन्दमोक्षाख्यब्रह्मप्राप्त्येकसाधनम् ।
आश्रमैरखिलैर्युक्तमष्टाङ्गैरपि संयुतम् ॥ २ ॥

---

२ ख. °दर्षित° । २ ग संयुतः ॥ २ ॥

ये तु विवेकवैराग्यसंपन्ना अपि रजोलेशानुवृत्त्या विक्षिप्तचेतसो मध्यमाधिकारिणः सदसैव चेतस एकाग्रत्वं न लभन्ते तेषामष्टाङ्गयोगो ज्ञानसाधनम्। तच्च दशमाध्यायमारभ्य खण्डशेषेण वक्ष्यति। ये तु प्रबलतरदुरितप्रतिबद्धचित्ता औत्सुक्यमात्रेण प्रवृत्ता अप्यप्रतिष्ठितजिज्ञासा अधमाधिकारिणस्तेषां जिज्ञासाप्रतिष्ठार्थं वर्णाश्रमधर्माणां कथंचिद्व्यतिक्रमे तन्निमित्तं तेन विशुद्धानां दानधर्मादिकं चोपायः। 'विविदिषन्ति यज्ञेन'—इत्यादिश्रुतेः। स चायमुपायो दशमादर्वाचीनेनाध्यायजातेनोपदिश्यत इति सकलोऽयं खण्डो ज्ञानोपायप्रतिपादकः ॥ २ ॥

वक्ष्ये कारुण्यतः साक्षाच्छृणु वाचस्पतेऽधुना ।
आसीदिदं तमोमात्रमात्माभिन्नं जगद्गुरो ॥ ३ ॥
ततः सत्त्वगुणक्षोभान्महत्तत्त्वमजायत ।
एक एव शिवः साक्षात्त्रिधा मूर्तिर्द्विधा पुनः ॥ ४ ॥
रजोगुणं समास्थाय ब्रह्मा स्यात्सृष्टिकारणम् ।
सत्त्वमास्थाय विष्णुः स्यात्पालनार्थं बृहस्पते ॥ ५ ॥
तमसा कालरुद्राख्यः सर्वसंहारकारणम् ।
असंख्या मूर्तयस्तेषां विजायन्ते पृथक्पृथक् ॥ ६ ॥
उत्तमाधमरूपेण गुणवैषम्यमात्रतः ।
शब्दादीनि च भूतानि श्रोत्रादीन्द्रियपञ्चकम् ॥ ७ ॥
वागादिपञ्चकं तद्वत्प्राणापानादिपञ्चकम् ।
मनोबुद्धिरहंकारश्चित्तं चेति चतुष्टयम् ॥ ८ ॥
अव्यक्तात्कालपाकेन प्रजायन्ते पृथक्पृथक् ।
सर्वे कालपराधीना न कालः कस्यचिद्वशे ॥ ९ ॥

तत्रैतस्मिन्नध्याये वर्णाश्रमधर्माणां सृष्टिं वक्तुं महदादिक्रमेण हिरण्यगर्भोत्पत्तिमाह—आसीदिदमित्यादि। एष च सर्गक्रमो सतखण्डेऽष्टमादिष्वध्यायेषु प्रपञ्चित इति नेह पुनरुच्यते। तत्र तु सूतेन मुनिभ्यः स्ववचनेनैवोक्तः। इह

१ घ. नत्र। २ क. घ. 'र्माणां क'। ३ ङ. 'वतारुद्रा'। ४ ङ. 'हर्षेण प'। ५ ङ. 'येरत'। ६ क. ख. ग. ङ. 'र्माणां हिरण्यगर्भो सृ'।

तु शिवेन बृहस्पतय उपदिष्टप्रकारवर्णनमेवेत्येतावानेव विशेषः ॥ ३ ॥ ४ ॥ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥

कालो मायात्मसंबन्धात्सर्वसाधारणात्मकः ।
हिरण्यगर्भो भगवान्प्रादुरासीत्प्रजापतिः ॥ १० ॥

हिरण्यगर्भ इति । यथोक्तसूक्ष्मभूतेन्द्रियकरणोपाधिको हिरण्यगर्भः पञ्चीकृतभूतमयशरीरः प्रजापतिरूपेण प्रादुरासीदित्यर्थः ॥ १० ॥

स वै शरीरी प्रथमः स वै पुरुष उच्यते ।
तेन ब्रह्माण्डमुत्पन्नं तन्मध्येऽयं बृहस्पते ॥ ११ ॥
भुवनानि च देवाश्च शतशोऽथ सहस्रशः ।
स्थावरं जङ्गमं चैव तथा वर्णाश्रमादि च ॥ १२ ॥
साम्बं सर्वेश्वरं ध्यात्वा प्रसादात्तस्य निर्ममे ।
प्रसादेन विना देवाः प्रसादेन विना नराः ॥ १३ ॥
प्रसादेन विना लोका न सिध्यन्ति महामुने ।
प्रसादाद्देवदेवस्य ब्रह्मा ब्रह्मत्वमागतः ॥ १४ ॥

प्रथमः शरीरीति स्थूलभूतमयशरीरसंबन्ध एव । तस्यैव यतः प्रथम इत्यर्थः। प्रजापतिपदप्रापकेण तपसा सर्वाणि पापानि पूर्वमोषतीति पुरुषः । श्रूयते हि– 'स यत्पूर्वोऽस्मात्सर्वस्मात्सर्वान्पाप्मन औषत्तस्मात्पुरुषः' इति ॥ ११ ॥ १२॥ ॥ १३ ॥ १४ ॥

विष्णुर्विष्णुपदं प्राप्तो रुद्रो रुद्रत्वमागतः ।
वर्णाश्रमाचारवता पुरुषेण महेश्वरः ॥ १५ ॥
आराध्यते प्रसादार्थं न दुर्वृत्तैः कदाचन ।
यस्मिन्प्रसन्ने सर्वेषां पुष्टिर्जायेत पुष्कला ॥ १६ ॥

एवं वर्णाश्रमाचाराणामुत्पत्तिमभिधाय तदाचरणोपयोगमाह—वर्णाश्रमाचारवतेति ॥ १५ ॥ १६ ॥

---

१ घ. °मेव° वि° । २ ख. °स्मात्सर्वा°न्पा° । ङ. °यत्पूर्वोऽस्मात्सर्वान्पाप्मन औ° ।

अहो तेन विना लोकश्रेष्ठेऽन्यत्र मायया ।
ब्रह्मचर्याश्रमस्थानां यतीनां च विशेषतः ॥ १७ ॥
वानप्रस्थाश्रमस्थानां गृहस्थानां वशो हरः ।
वर्णाश्रमसमाचारात्प्रसन्ने परमेश्वरे ॥ १८ ॥
साक्षात्तद्विषयं ज्ञानमचिरादेव जायते ।
ज्ञानादज्ञानविध्वस्तिर्न कर्मभ्यः कदाचन ॥ १९ ॥
अज्ञाने सति संसारो ज्ञाने स कथमुच्यते ।
तस्माज्ज्ञानेन मुक्तिः स्यादज्ञानस्य क्षयान्मुने ॥ २० ॥

चतुर्णामाश्रमाणां शिवप्रसादद्वारा ज्ञानोपयोगमाह—ब्रह्मचर्याश्रमेति॥१७॥ ॥ १८ ॥ १९ ॥ २० ॥

सर्वं संक्षेपतः प्रोक्तं मया वेदविदां वर ।
तस्मात्त्वं च महाभाग वर्णाश्रमरतो भव ॥ २१ ॥

सूत उवाच—

इति श्रुत्वा मुनिश्रेष्ठाः प्रणम्य परमेश्वरम् ।
स्तोतुमारब्धवे विप्राः प्रसादार्थं त्रिशूलिनः ॥ २२ ॥

सर्वं संक्षेपत इति । अयमुपायोऽनुष्ठेय इति संक्षेपेणोक्तमित्यर्थः । अनुष्ठानप्रकारस्तु प्रपञ्चेन वक्ष्यते—वर्णाश्रमरत इति । तत्प्रयुक्तधर्मरत इत्यर्थः । तत्र वर्णधर्माः—'ब्राह्मणो बृहस्पतिसवेन राजा राजसूयेन यजेत वैश्यो वैश्यस्तोमेन' इत्यादयः । आश्रमधर्माः—'आहूतश्चाप्यधीयीत' इत्यादिब्रह्मचारिधर्माः । 'क्षौमे वसानौ जायापती अग्निमादधीयाताम्' इत्यादयो गृहस्थधर्माः । अरण्यवासादयो वनस्थधर्माः । श्रवणादयो यतिधर्माश्चेति ॥ ॥ २१ ॥ २२ ॥

बृहस्पतिरुवाच—

नमो हराय देवाय त्रिनेत्राय त्रिशूलिने ।
तापसाय महेशाय तत्त्वज्ञानप्रदायिने ॥ २३ ॥

---

१ क. 'स्द मार्गीय' । २ ङ. स्तन' ।

वर्णाश्रमधर्माणामुत्पत्तिं संग्रहेण स्वरूपं च श्रुतवानपि बृहस्पतिस्तत्प्रपञ्च-शुश्रूषया देवं तुष्टाव—नमो हराय देवायेत्यादिना ॥ २३ ॥

नमो मौञ्जाय शुभ्राय नमः कारुण्यमूर्तये ।
नमो देवादिदेवाय नमो वेदान्तवेदिने ॥ २४ ॥
नमः पराय रुद्राय सुपाराय नमो नमः ।
विश्वमूर्ते महेशाय विश्वाधाराय ते नमः ॥ २५ ॥

नमो मौञ्जायेति । मुञ्जा अन्नं ' ऊर्जैं मुञ्जा ' इति श्रुतेः । तच्च भोग-मिति तत्संबन्धी भोगप्रद ईश्वरस्तस्मै । मुञ्जपदेन मुञ्जवान्वा हिमवतः गिर-रुमदेश उपलक्ष्यते । सोऽस्य निवास इति मौञ्जस्तस्मै । ' परो मौञ्जवतोऽ-तीहि ' इति श्रुतेः ॥ २४ ॥ २५ ॥

नमो भक्तभवच्छेदकारणायामलात्मने ।
कालाय कालकालाय कालातीताय ते नमः ॥ २६ ॥
जितेन्द्रियाय नित्याय जितक्रोधाय ते नमः ।
नमः पाषण्डभङ्गाय नमः पापहराय ते ॥ २७ ॥

कालाय भाविकालवद्भूतमयं कलयति जगदेप कालोऽतस्तदात्मने । काल-कालाय । तमपि कलयते तस्यापि परिच्छेदकाय । कालातीताय स्वयं केन-चिदप्यपरिच्छिन्नाय ॥ २६ ॥ २७ ॥

नमः पर्वतराजेन्द्रकन्यकापतये नमः ।
योगानन्दाय योगाय योगिनां पतये नमः ॥ २८ ॥

योगानन्दायेति । योगः समाधिः । ' युज समाधौ ' इति धातुः । तत्राभि-व्यज्यमानो य आनन्दस्तद्रूपाय । योगाय समाधिरूपाय । योगिनां पतय इति योगसमाधिनिष्ठानां समाधिफलप्रदानेन पालकाय च नम इत्यर्थः ॥ २८ ॥

प्राणायामपराणां तु प्राणरक्षाय ते नमः ।
मूलाधारे प्रविष्टाय मूलदीपाय ते नमः ॥ २९ ॥

प्राणायामेति । श्वासप्रश्वासयोर्गतिविच्छेदः प्राणायामस्तदभ्यासपराणाम् ।

---

१ घ. मौञ्जा । २ क. ख. ग. घ. 'विश्व' ।

तेहि यदा कण्ठादिस्थानेषु लकारादिभूतवर्णैः सह प्राणनियमंमभ्यस्यन्ति तदा ते कालं वञ्चयन्ति । उक्तं हि—

' कण्ठे भ्रूमध्ये हृदि नाभौ सर्वाङ्गे स्मरेत्क्रमतः ।
लवरसमीरणयवर्णैरनिलसमा कालवञ्चनेयं स्यात् ' इति ।

अतस्तेषां वञ्चितकालानां या प्राणरक्षा भवति साऽपि त्वत्प्रसादलभ्येत्यर्थः । मूलाधार इति । परा हि शक्तिर्मूलाधारादामस्तकमुद्गता तत्र चन्द्रमण्डलसंस्पर्शात्तत्रत्यामृतधारया सह स्वयमपि पुनर्मूलाधारं प्रविशति । यदाहुः—

" मूलालवालकुहरादुदिता भवानि निर्भिद्य षट्सरसिजानि तडिल्लतेव ।
भूयोऽपि तत्र विशसि ध्रुवमण्डलेन्दुनिष्पन्दमानसुखबोधसुधास्वरूपे" । इति ।

तस्याः शक्तेः शक्तिमाञ्शिवोऽप्यभिन्न इति हि निरूपितम् । अतः सोऽपि मूलाधारे प्रविष्ट इत्यर्थः । मूलदीपायेति । सोमसूर्याग्नयो हि सर्वं दीपयन्तीति दीपास्ते हि नियमकालेन प्रतिभावमेवार्थं दीपयितुं शक्नुवन्ति नान्यथा श्रूयते हि—

"न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः ।
तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति ॥ " इति ।

अतश्चिद्रूपो मूलदीपस्तस्मै नमः ॥ २९ ॥

नाभिकन्दे प्रविष्टाय नमो हृद्देशवर्तिने ।
सच्चिदानन्दपूर्णाय नमः साक्षात्परात्मने ॥ ३० ॥

नाभिकन्द इति । तत्र तयोरपि स्थानयोरभिव्यक्तिहेतुत्वात् ॥ ३० ॥

नमः शिवायाद्भुतविग्रहाय ते नमः शिवायाद्भुतविक्रमाय ते ।
नमः शिवायाखिलनायकाय ते नमः शिवायामृतहेतवे नमः ॥ ३१ ॥

सूत उवाच—

य इदं पठते नित्यं स्तोत्रं भक्त्या सुसंयतः ।
तस्य मुक्तिः करस्था स्याच्छंकरप्रियकारणात् ॥ ३२ ॥
विद्यार्थी लभते विद्यां विवाहार्थी गृही भवेत् ।
वैराग्यकामो लभते वैराग्यं भवतारकम् ॥ ३३ ॥

---

१ ग. घ. ङ. °भाव° । २ क. °दा केवलं ते° । ३ घ. °न्त्राम° । ४ घ. °कण्ठे च° ।

अमृतहेतव इति । अमृतं पुण्यफलं स्वर्गादि विद्याफलं चापवर्गः । तदुभयहेतवे । तथात्वं च गतखण्डे तृतीयाध्याये वर्णितम् ॥ ३१ ॥ ३२ ॥ ३३ ॥

तस्माद्दिने दिने यूयमिदं स्तोत्रं समाहिताः ।
पठन्तु भवनाशार्थमिदं हि भवनाशनम् ॥ ३४ ॥

इति श्रीस्कन्दपुराणे सूतसंहितायां ज्ञानयोगखण्ड आत्मना सृष्टिनिरूपणं नाम द्वितीयोऽध्यायः ॥ २ ॥

पठन्त्विति पुरुषव्यत्ययः ॥ ३४ ॥ *

इति श्रीस्कन्दपुराणे सूतसंहिताटीकायां ज्ञानयोगखण्ड आत्मना सृष्टिनिरूपणं नाम द्वितीयोऽध्यायः ॥ २ ॥

---

ईश्वर उवाच—

अथातः संप्रवक्ष्यामि ब्रह्मचर्याश्रमं मुने ।
आम्नायैकसुसंसिद्धमादराच्छृणु सुव्रत ॥ १ ॥

विदितबृहस्पत्यभिप्रायः शिवो वर्णाश्रमधर्मान्प्रपञ्चयति—तत्र ब्रह्मचर्यपूर्वकत्वादाश्रमान्तराणां तद्धर्मानेव प्रथममाह—अथातः संप्रवक्ष्यामीति । यतो ब्रह्मचर्यं प्रथम आश्रमोऽतो बृहस्पतेर्जिज्ञासानन्तरं तद्धर्मान्संप्रवक्ष्यामि । आम्नायैकेति । ' अष्टवर्षं ब्राह्मणमुपनयीत ' इत्यादिश्रुतेः ॥ १ ॥

उपनीतो द्विजो वेदानधीयीत समाहितः ।
दण्डं यज्ञोपवीतं च मेखलां च तथैव च ॥ २ ॥
कृष्णाजिनं च काषायं शुक्लं वा वस्त्रमुत्तमम् ।
धारयेन्मन्त्रतो विद्वान्स्वसूत्रोक्तेन वर्त्मना ॥ ३ ॥

उपनीतो द्विज इति । अध्यापनस्य दृष्टार्थतया प्राप्तत्वेनाविधेयत्वात् 'उपनीय तमध्यापयीत'[1] इतिवाक्ये प्रयोजकव्यापारवाचिभ्यामुपनयनाध्यापनधातुभ्यां प्रयोज्यव्यापारलक्षणया ' उपगच्छेत्सोऽधीयीत ' इति हि व्याचक्षते ॥ २ ॥ ३ ॥

---

* संहितायाश्च सूतस्य व्याख्या तात्पर्यदीपिकाम् ॥ सुस्थितामनुगृह्णातु विद्यातीर्थमहेश्वरः ॥

---

१ क. °यीतोपि हि वा° । ख. °यीतेत्यस्मिन्वाक्ये ।

भिक्षाहारो यथाकामं गुरुशुश्रूषणे रतः ।
धारयेद्बैल्वपालाशौ दण्डौ केशान्तिकौ द्विजः ॥ ४ ॥
आश्वत्थं वा ऋजुं सौम्यमव्रणं त्वग्विभूषितम् ।
सायंप्रातरुपासीत संध्यां विप्रः समाहितः ॥ ५ ॥

बैल्वपालाशौ विकल्पितौ । केशान्तिकाविति । केशानामन्तिकौ । पुरुष-शिरःसंमितावित्यर्थः ॥ ४ ॥ ५ ॥

कामं क्रोधं तथा लोभं मोहं चैव विवर्जयेत् ।
अग्निकार्यं द्विजः कुर्यात्सायं प्रातः स्वसूत्रतः ॥ ६ ॥

काममिति मदमात्सर्ययोरप्युपलक्षणम् ॥ ६ ॥

देवानृषीन्पितॄन्स्नात्वा तर्पयेद्ब्राह्मणोत्तमः ।
समिद्धाग्निसमुत्थेन विरजानलजेन च ॥ ७ ॥
अग्निहोत्रसमुत्थेन भस्मना सजलेन च ।
अग्निरित्यादिभिर्मन्त्रैः षड्भिर्वा सप्तभिः क्रमात् ॥ ८ ॥
विमृज्याङ्गानि सर्वाणि समुद्धूल्य ततः परम् ।
तिर्यक्त्रिपुण्ड्रमुरसा ललाटेन कराङ्कितः ॥ ९ ॥

समिद्धाग्निसमुत्थेनेति । समिद्धोऽग्निः शिवाग्निस्तदुत्थेन भस्मना । उक्तं शैवागमेषु—

"शुद्धं गोमयमादाय सद्योजातेन भस्मवित् ।
पञ्चगव्यात्मकं पिण्डं कृत्वा वामेन चाम्बुभिः ॥
शिवाग्निना दहेद्घोरं चालन्या चालयेत्परम् ।
स्वर्णाभं नवे कुम्भे भस्म मूलेन संचयेत् ॥
ततः किंचित्समुद्धृत्य जप्त्वा ईशेन सप्तधा ।
क्रमशः शिरसः कार्यं तेनाङ्गैरवघर्षणम् ॥
ततश्च यावता स्नानं तावदुद्धृत्य दापयेत् ।
फलाभिर्भस्म गायत्र्या मध्याङ्गैश्च शिवाणुना " ।

---

* पालश्वत्थाद ( ? ) इति सर्वपुस्तकेषु दृश्यते ।

---

१ क. "र्द तमः क्रु" । २ क. ख. ग. घ. "के हि [illegible]" । ३ ग. [illegible] । ४ ग. [illegible]

‘ ॐसद्यो जाताय विद्महे । वामदेवाय धीमहि । तन्नो घोरः प्रचोदयात् ’ इति भस्मगायत्री । विरजानलजेनेति । “ ज्योतिरहं विरजा विपाप्मा भूयासꣳ स्वाहा ” इत्येतैर्मन्त्रैर्हुतोऽग्निर्विरजानलस्तदुत्थेन ॥ ७ ॥ ८ ॥ ९ ॥

ग्रीवायां च शुचिर्भूत्वा शिवं ध्यात्वा शिवां तथा ।
मेधावीत्यादिभिर्मन्त्रैर्धारयेद्ब्राह्मणः सदा ॥ १० ॥

‘ मेधावी भूयासं ’ ‘ तेजस्वी भूयासम् ’ इत्यादयो मन्त्राः ॥ १० ॥

त्रियायुषं जमदग्नेरिति मन्त्रेण वा द्विजः ।
महादेवार्चनं कुर्यात्पुष्पाद्यैः यत्नतोऽन्यतः ॥ ११ ॥
मातरं पितरं वृद्धं तथा ज्येष्ठं स्वकं गुरुम् ।
अध्यात्मज्ञानिनं नित्यं श्रद्धयैवाभिवादयेत् ॥ १२ ॥

अन्यत इति । अन्यैरक्षतचन्दनादिभिः ॥ ११ ॥ १२ ॥

असावहं भो नामास्मि सम्यक्प्रणतिपूर्वकम् ।
आयुष्मान्भव सौम्येति वाच्यो विप्रोऽभिवादने ॥ १३ ॥
आकारश्चास्य नाम्नोऽन्ते वाच्यः पूर्वाक्षरः प्लुतः ।
व्यत्यस्तपाणिना कार्यमुपसंग्रहणं गुरोः ॥ १४ ॥

अभिवादने कृते अभिवादितश्चैव गुर्वादिभिः ‘ आयुष्मान्भव सौम्य देवदत्ता ३ ’ इत्यादिक्रमेण प्रत्यभिवादनं च कार्यमित्याह । आयुष्मान्भवेति ॥ ॥ १३ ॥ १४ ॥

सव्येन सव्यः स्प्रष्टव्यो दक्षिणेन तु दक्षिणः ।
लौकिकं वैदिकं चापि तथाऽध्यात्मिकमेव च ॥ १५ ॥
आददीत यतो ज्ञानं तत्पूर्वमभिवादयेत् ।
मातापित्रोश्च वंश्यांश्च गुरुवंश्यान्गुणाधिकान् ॥ १६ ॥
अनुवर्तेत मनसा वाचा कायेन सादरम् ।
गुरुं दृष्ट्वा समुत्तिष्ठेन्नमस्कृत्वा कृताञ्जलिः ॥ १७ ॥
तेनैवाभिहितः पश्चात्समासीतान्यथागतः ।
सत्यमेव वदेन्नित्यमधीतं च न विस्मरेत् ॥ १८ ॥

नित्यं नैमित्तिकं कर्म मोक्षकामनयाऽथवा ।
विध्युक्तमिति बुद्ध्या वा शान्तो भूत्वा समाचरेत् ॥ १९ ॥

स्पष्टत्वात्समेव दर्शयति । सन्ध्येनेति ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥

भिक्षामाहृत्य विप्रेभ्यो लाभे वर्णान्तरेष्वपि ।
निवेद्य गुरवेऽश्नीयाद्ब्रह्मचारी दिने दिने ॥ २० ॥

विप्रेभ्य इति । तदलाभे वर्णान्तरेषु ॥ २० ॥

भवत्पूर्वं चरेद्भैक्ष्यमुपनीतो द्विजस्तथा ।
भवन्मध्यं तु राजन्यो वैश्यस्तु भवदुत्तरम् ॥ २१ ॥
अभिशस्तेषु सर्वेषु भिक्षां नित्यं विवर्जयेत् ।
प्राङ्मुखोऽन्नानि भुञ्जीत सूर्याभिमुख एव वा ॥ २२ ॥

भवत्पूर्वमित्यादि । भवति भिक्षां देहीति ब्राह्मणः ॥ भिक्षां भवति देहीति क्षत्रियः । भिक्षां देहि भवतीति वैश्य इत्यर्थः ॥ २१ ॥ २२ ॥

प्रक्षाल्य चरणौ हस्तौ द्विराचम्यान्नमुग्रयेत् ।
प्राणायेत्यादिभिर्मन्त्रैर्हुत्वा प्राणाहुतीर्द्विजः ॥ २३ ॥
वेदाभ्यासैकनिष्ठः स्यात्तान्यमन्त्ररतो भवेत् ।
एवमभ्यसतस्तस्य वैराग्यं जायते यदि ॥ २४ ॥
प्रव्रजेत्परमे हंसे मोक्षकामनया द्विजः ।
नैष्ठिको वा गृही वाऽपि भवेत्कामी यथारुचि ॥ २५ ॥

इति श्रीस्कन्दपुराणे सूतसंहितायां ज्ञानयोग-
खण्डे ब्रह्मचर्याश्रमविधिकथनं नाम
तृतीयोऽध्यायः ॥ ३ ॥

प्राणायेति । प्राणाय स्वाहाऽपानाय स्वाहेत्यादयो मन्त्राः ॥२३॥२४॥२५॥
इति श्रीस्कन्दपुराणे सूतसंहिताटीकायां ज्ञानयोगखण्डे ब्रह्मचर्याश्रमविधिकथनं नाम तृतीयोऽध्यायः ॥ ३ ॥

---

१ ग. 'वं भवेद्भैक्ष्यं'। २ ग. वा।

( अथ चतुर्थोऽध्यायः )

ईश्वर उवाच–

अथातः संप्रवक्ष्यामि गार्हस्थ्यं संग्रहेण ते ।
अधीत्य वेदान्विविधान्पूर्वोक्तेनैव वर्त्मना ॥ १ ॥

ब्रह्मचर्यधर्मान्संग्रहेणोक्त्वा गृहस्थधर्मान्वक्तुं प्रतिजानीते—अथात इति । चरितब्रह्मचर्यस्यैव विवाहः । यथाऽऽहुः—

'वेदानधीत्य वेदौ वा वेदं वाऽपि यथाक्रमम् ॥
अविप्लुतब्रह्मचर्यो लक्षण्यां स्त्रियमुद्वहेत्' इति ॥

अतस्तदनन्तरं गृहस्थधर्मा उच्यन्ते ॥ १ ॥

आचार्यानुज्ञया युक्तः स्नात्वा गार्हस्थ्यमाविशेत् ।
अनुकूले कुले गोत्रप्रवरादिविवर्जिते ॥ २ ॥

सूत्रोक्तेनैव मार्गेण वरयेत्कुलजां स्त्रियम् ।
सर्वलक्षणसंपन्नां साध्वीमन्यां विवर्जयेत् ॥ ३ ॥

ऋक्षसंज्ञां नदीसंज्ञां वृक्षसंज्ञां च वर्जयेत् ।
तया धर्मं चरेन्नित्यं सहितः संयतेन्द्रियः ॥ ४ ॥

स्नात्वा समावर्तनं कृत्वा । प्रवरादिविवर्जित इति । 'असमानार्षगोत्रजाम्' इति स्मृतेः ॥ २ ॥ ३ ॥ ४ ॥

ऋतुकालेऽङ्गनासेवां कुर्यात्प्रातः समन्त्रकम् ।
देवतान्यतिथिभिक्ष्वार्थं पचेन्नैवाऽऽत्मकारणात् ॥ ५ ॥

समन्त्रकमिति । 'अमोहमस्मि सा त्वम्' इत्याद्यो मन्त्राः ॥ ५ ॥

आत्मार्थं यः पचेन्मोहान्नरकार्थं स जीवति ।
धर्मार्थं जीवनं येषां संतानार्थं च मैथुनम् ॥ ६ ॥

ते मुच्यन्ते हि संसारात्तान्ये नारकिणः सदा ।
याजनाध्यापनाभ्यां च विशुद्धेभ्यः प्रतिग्रहात् ॥ ७ ॥

आत्मार्थमिति । 'नार्यमणं पुष्यति नो सखायं केवलाघो भवति केवलादी' इति श्रुतेः । 'न पचेदन्नमात्मनः' इति स्मृतेः ॥ ६ ॥ ७ ॥

---

१ क. ध. ग. घ. यतश्च । २ ध. मार्गेत् ।

यात्रार्थमर्जयेदर्थं यागार्थं वा द्विजोत्तमः ।
निर्जने निर्भये देशे विण्मूत्रादि विसर्जयेत् ॥ ८ ॥
प्रक्षालयेद्गुदं शिश्नं पादद्वंद्वं करद्वयम् ।
मृज्जलाभ्यां यथाशक्ति गन्धलेपनिवृत्तये ॥ ९ ॥
यावन्मात्रं मनःशुद्धिस्तावच्छौचं विधीयते ।
पश्चादाचमनं कुर्याद्दन्तकाष्ठं च भक्षयेत् ॥ १० ॥
द्विराचम्य पुनः स्नात्वा कृत्यशेषं समाचरेत् ।
प्राणायामत्रयं कुर्यात्सावित्रीं च जपेद्बुधः ॥ ११ ॥
उपस्थानं ततः कुर्यान्मध्याह्नेऽप्येवमाचरेत् ।
ब्रह्मयज्ञं द्विजः कुर्याद्वेदपारायणे रतः ॥ १२ ॥
अन्यानि यानि कर्माणि नित्यं तानि समाचरेत् ।
अग्निकार्यं द्विजः कुर्याद्बलिकर्मादिकं तथा ॥ १३ ॥

यात्रार्थं शरीरयात्रार्थम् ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥

नित्यश्राद्धं तथा दानमशक्तानां च रक्षणम् ।
दयां सर्वेषु भूतेषु कुर्याद्गार्हस्थ्यमाश्रितः ॥ १४ ॥
यतिसंरक्षणं कुर्यादन्नपानादिभिः सदा ।
यतिश्च ब्रह्मचारी च पक्वान्नस्वामिनावुभौ ॥ १५ ॥
तयोरन्नमदत्त्वा तु भुक्त्वा चान्द्रायणं चरेत् ।
यतिहस्ते जलं दद्याद्भैक्षं दद्यात्पुनर्जलम् ॥ १६ ॥
तद्भैक्षं मेरुणा तुल्यं तज्जलं सागरोपमम् ।
एकवारं गृही नित्यमश्नीयादुत्तमं हि तत् ॥ १७ ॥
द्विवारं वा क्षमोऽश्नीयाद्द्वात्रिंशद्ग्रासमन्वहम् ।
कुक्कुटाण्डप्रमाणेन न हृष्टो नैव विषादवान् ॥ १८ ॥

दयां सर्वेषु भूतेष्विति । यतो गृहस्थाश्रमः सर्वेषामुपजीव्यः । श्रूयते हि

१ क. °जैरर्थं द° । २ ख. क. °क्यासम् । ३ क. ग. प्रमाद° ।

गृहस्थाश्रममुद्दिश्य—"अयमात्मा सर्वेषां भूतानां लोकः। स यज्जुहोति यद्यजते तेन देवानां लोकः। अथ यदनुब्रूते तेन ऋषीणाम्। अथ यत्पितृभ्यो निपृणाति यत्प्रजामिच्छते तेन पितृणाम्। अथ यन्मनुष्यान्वासयते यदेभ्योऽशनं ददाति तेन मनुष्याणाम्। यदस्य गृहेषु श्वापदा वयांस्यापिपीलिकाभ्य उपजीवन्ति तेन तेषां लोकः" इति ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥

होमे जपे च भुक्तौ च गुरुवृद्धाद्युपासने ।
तथैवाऽऽचमने यज्ञोपवीती स्यान्न चान्यथा ॥ १९ ॥
वैणवीं धारयेद्यष्टिं सोदकं च कमण्डलुम् ।
उद्धूलनं सकृत्कुर्यात्सर्वदेवोक्तवर्त्मना ॥ २० ॥

न चान्यथेति । उपवीतरहितो न स्यादित्यर्थः ॥ १९ ॥ २० ॥

त्रैयम्बकेण मन्त्रेण सतारेण शिवेन च ।
त्रिपुण्ड्रं धारयेन्नित्यं गृहस्थाश्रममाश्रितः ॥ २१ ॥
तेनाधीतं श्रुतं तेन तेन सर्वमनुष्ठितम् ।
येन विप्रेण शिरसि त्रिपुण्ड्रं भस्मना धृतम् ॥ २२ ॥
त्रिपुण्ड्रं धारयेद्भक्त्या मनसाऽपि न लङ्घयेत् ।
श्रुत्या विधीयते यस्मात्तत्त्यागी पतितो भवेत् ॥ २३ ॥

त्रैयम्बकेणेति । सतारेण शिवेन सप्रणवेन पञ्चाक्षरेण ॥२१॥२२॥२३॥

रुद्राक्षं धारयेन्नित्यं रुद्राक्षाणामिति श्रुतिः ।
लिङ्गे समर्चयेन्नित्यं देवदेवं महेश्वरम् ॥ २४ ॥
अग्नीनाधाय विधिवत्कुर्याद्यज्ञाननन्तरम् ।
यज्ञैः सर्वाणि पापानि विनश्यन्ति न संशयः ॥ २५ ॥
प्रक्षीणाशेषपापस्य शुद्धान्तःकरणस्य तु ।
देवदेवपरिज्ञाने वाञ्छा जायेत सुव्रत ॥ २६ ॥

रुद्राक्षाणामिति श्रुतिरिति । स्मृत्यनुमितश्रुतिरित्यर्थः ॥ २४ ॥२५ ॥२६॥

स्वर्गकामो यदि स्वर्गं याति यज्ञाद्द्विजोत्तमः ।
पुत्रमुत्पादयेत्स्वस्यां पितृणामृणशान्तये ॥ २७ ॥

निष्कामस्य जिज्ञासाजनका यज्ञादय इत्युक्तम् । सकामस्य स्वर्गादिकं जनयन्तीत्याह—स्वर्गकाम इति । यदि स्वर्गकामस्तर्हि यज्ञात्स्वर्गं यातीति 'स्वर्गकामो यजेत' 'यज्ञेन विविदिषन्ति' इति श्रुतिद्वयादियं व्यवस्था ॥ २७ ॥

सत्यं ब्रूयात्प्रियं ब्रूयान्न भूतेषु सर्वदा ।
एवं समाचरन्विप्रो विरक्तश्चेद्गृहाश्रमात् ॥ २८ ॥
संन्यसेत्सर्वकर्माणि वेदान्ताभ्यासयत्नवान् ।
वेदान्तश्रवणाभावे पतितोऽयं भवेद्ध्रुवम् ॥ ॥ २९ ॥

गृहाश्रमात्संन्यसेदिति च । "ब्रह्मचर्यं समाप्य गृही भवेत् । गृहाद्वनी भूत्वा प्रव्रजेत् । यदि वेतरथा ब्रह्मचर्यादेव प्रव्रजेद्गृहाद्वा वनाद्वा" इति ॥ ॥ २८ ॥ २९ ॥

विरक्तोऽपि मुमुक्षुश्चेद्धंसे वा संन्यसेद्गृही ।
बहूदके वा शक्तश्चेन्न्यसेद्विप्रः कुटीचके ॥ ३० ॥

विरक्तोऽपीति । मुमुक्षुश्चेत्परमहंसो भवेत् । अमुमुक्षुरपि शक्तश्चेद्धंसो बहूदको वा भवेत् । अशक्तश्चेत्कुटीचको वा भवेदित्यर्थः ॥ ३० ॥

अविरक्तो गृही चान्ते वानप्रस्थं समाश्रयेत् ।
अथवा यावदायुष्यं गार्हस्थ्यं सम्यगाचरेत् ॥ ३१ ॥

अविरक्तो गृहीति । अतो गार्हस्थ्याद्वानप्रस्थाश्रममाश्रयेदित्यर्थः । यावदायुष्यं वा सम्यग्गार्हस्थ्यमाचरेत् ॥ ३१ ॥

गृहस्थाद्याश्रमाः सर्वे समुत्पन्नाः सुरक्षिताः ।
तस्माद्गृहस्थ एव स्यादविरक्तो द्विजः सदा ॥ ३२ ॥

इति श्रीसूतसंहितायां ज्ञानयोगखण्डे गृहस्थाश्रमविधि-
निरूपणं नाम चतुर्थोऽध्यायः ॥ ४ ॥

गार्हस्थ्यस्य माहात्म्ये हेतुः । गृहस्थाद्याश्रमा इति । यत आश्रमान्तराणां सर्वेषां स्वरूपलाभः स्वधर्मपरिपालनं च गृहस्थाश्रमनिबन्धनम् । अतः प्रशस्त इत्यर्थः ॥ ३२ ॥

इति श्रीसूतसंहितातात्पर्यदीपिकायां ज्ञानयोगखण्डे गृहस्थाश्रमविधिनिरूपणं नाम चतुर्थोऽध्यायः ॥ ४ ॥

( अथ पञ्चमोऽध्यायः )

ईश्वर उवाच—

अथातः संप्रवक्ष्यामि वानप्रस्थाश्रमं मुने।
पुत्रे भार्यां विनिक्षिप्य गृहीत्वा वा समाहितः ॥ १ ॥
शुक्लपक्षे शुभे वारे शुभनक्षत्रसंयुते ।
सुमुहूर्ते वनं गच्छेद्गृहस्थश्चोत्तरायणे ॥ २ ॥

ब्रह्मचर्यादुत्तमं गार्हस्थ्यमभिधाय ततोऽप्युत्तमं वानप्रस्थाश्रमं च वक्तुं प्रतिजानीते—अथात इति । यतो गृहस्थादुत्तमो वनस्थः । यदाऽऽहुः—

'ब्रह्मचारी गृहस्थश्च वानप्रस्थोऽथ भिक्षुकः ॥
चत्वार आश्रमाः प्रोक्ता यो यः पश्चात्स उत्तमः' इति ॥

अतो गृहस्थधर्माभिधानानन्तरं वानप्रस्थधर्माभिधानमित्यर्थः ॥ १ ॥ २ ॥

यमादिसहितः शुद्धस्तपः कुर्यात्समाहितः ।
शाकमूलफलाशी स्यात्तेनेशं पूजयेद्बुधः ॥ ३ ॥

तेनेशमिति । तपःप्रभृतिकं हि वनस्थस्य स्वधर्मः । स्वधर्मानुष्ठानमेवेश्वरस्य पूजा ॥

'स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः' इत्युक्तम् ॥ ३ ॥

ग्रामादाहृत्य वाऽश्नीयाद्ग्रासान्षोडश बुद्धिमान् ।
जटाश्च बिभुयान्नित्यं नखलोमानि नोत्सृजेत् ॥ ४ ॥

षोडशेति । यत आहुः—

"अष्टौ ग्रासा मुनेः प्रोक्ताः षोडशारण्यवासिनः ॥
द्वात्रिंशत्तु गृहस्थानां यथेष्टं ब्रह्मचारिणाम्" इति ॥ ४ ॥

वेदाभ्यासं सदा कुर्याद्वाग्यतः सुसमाहितः ।
अग्निहोत्रं च जुहुयात्पञ्च यज्ञान्समाचरेत् ॥ ५ ॥
चीरवासा भवेत्कुर्यात्स्नानं त्रिषवणं बुधः ।
सर्वभूतानुकम्पी स्यात्प्रतिग्रहविवर्जितः ॥ ६ ॥

पञ्च यज्ञानिति। श्रूयते हि—'पञ्च वा एते महायज्ञाः। देवयज्ञः पितृयज्ञो भूतयज्ञो मनुष्ययज्ञो ब्रह्मयज्ञ इति। यदग्नौ जुहोत्यपि समिधं तद्देवयज्ञः संतिष्ठते। यत्पितृभ्यः स्वधा करोत्यप्यपस्तत्पितृयज्ञः संतिष्ठते। यद्भूतेभ्यो बलिं हरति तद्भूतयज्ञः संतिष्ठते। यद्ब्राह्मणेभ्योऽन्नं ददाति तन्मनुष्ययज्ञः संतिष्ठते। यत्स्वाध्यायमधीयीतैकामप्यृचं यजुः साम वा तद्ब्रह्मयज्ञः संतिष्ठते' इति॥५॥६॥

वर्जयेन्मधुमांसानि भौमानि वनजानि च।
एकवारं समश्नीयाद्रात्रौ ध्यानपरो भवेत्॥ ७॥
जितेन्द्रियो जितक्रोधो भवेदध्यात्मचिन्तकः।
भूमौ शयीत सततं सावित्रीं च जपेद्बुधः॥ ८॥

भौमानीति। छत्राकादीनि। वनजानीति। वनं जलम्। जलजानि कच्छपादीनि—

"पञ्च पञ्चनखा भक्ष्या गोधाकच्छपशल्लकाः॥
शशश्च नकुलश्च"

इति गृहस्थस्याभ्यनुज्ञातान्यपि। तथा मधु माक्षिकं च वनस्थेन वर्जनीयमित्यर्थः॥ ७॥ ८॥

क्रोधपैशुन्यनिद्रादि दूरतः परिवर्जयेत्।
कृच्छ्रं चान्द्रायणं कुर्यान्मासि मासि वने स्थितः॥ ९॥

कृच्छ्रं चान्द्रायणमिति। कृच्छ्रलक्षणानि मनुनोक्तानि—

"त्र्यहं प्रातस्त्र्यहं सायं त्र्यहमद्यादयाचितम्।
त्र्यहं परं तु नाश्नीयात्प्राजापत्यं चरन्द्विजः" इति॥

एकभक्तादिषु ग्राससंख्याऽऽपस्तम्बेन—

'सायं द्वात्रिंशतिर्ग्रासाः प्रातः षड्विंशतिः स्मृताः॥
चतुर्विंशतिरायाच्याः परं निरशनं स्मृतम्' इति॥

ग्रासप्रमाणमपि तेनैवोक्तम्—

'कुक्कुटाण्डप्रमाणेन यथा चाऽऽस्यं विशेत्सुखम्' इति॥

चान्द्रायणं पञ्चविधम्। पिपीलिकामध्यं यवमध्यमृषिचान्द्रायणं शिशुचान्द्रायणं यतिचान्द्रायणं चेति। पिपीलिकामध्यमाह वसिष्ठः—

'मासस्य कृष्णपक्षादौ ग्रासानद्याच्चतुर्दश।
ग्रासापचयभोजी सन्पक्षशेषं समापयेत्॥

तथैव शुक्लपक्षादौ ग्रासं भुञ्जीत चापरम् ॥
ग्रासोपचयभोजी सन्पक्षशेषं समापयेत्' इति ।

यदाऽऽह यमः—

'एकैकं ह्रासयेत्पिण्डं कृष्णे शुक्ले च वर्धयेत् ।
एतत्पिपीलिकामध्यं चान्द्रायणमुदाहृतम् ॥
वर्धयेत्पिण्डमेकैकं शुक्ले कृष्णे च ह्रासयेत् ।
एतच्चान्द्रायणं नाम यवमध्यं प्रकीर्तितम् ॥
त्रींस्त्रीन्पिण्डान्समश्नीयान्नियतात्मा दृढव्रतः ।
हविष्यान्नस्य वै मासमृषिचान्द्रायणं स्मृतम् ॥
चतुरः प्रातरश्नीयाच्चतुरः सायमेव वा ।
पिण्डानेतद्धि बालानां शिशुचान्द्रायणं स्मृतम् ॥
पिण्डानष्टौ समश्नीयान्मासं मध्यंदिने रवौ ।
यतिचान्द्रायणं ह्येतत्सर्वकल्मषनाशनम्' इति ॥ ९ ॥

ग्रीष्मे पञ्चतपाश्च स्याद्वर्षास्वभ्रावकाशगः ।
आर्द्रवासास्तु हेमन्ते क्रमशो वर्धयंस्तपः ॥ १० ॥

पञ्चतपा इति । पञ्च तपांसि तापकानि दिक्चतुष्टयेऽग्नय उपर्यादित्यश्चेति यस्य स पञ्चतपाः । अभ्रावकाशग इति । अभ्रदर्शनस्यावकाशोऽभ्रावकाशो गृहपादपच्छत्रादिरहितस्तत्र गत इत्यर्थः ॥ १० ॥

उपस्पृश्य त्रिषवणं पितॄन्देवांश्च तर्पयेत् ।
एकपादेन तिष्ठेत वायुभक्षोऽब्दमध्यमे ॥ ११ ॥
पयः पिबेच्छुक्लपक्षे कृष्णपक्षे च गोमयम् ।
जीर्णपर्णाशनो वा स्यात्कृच्छ्रैर्वा वर्तयेत्सदा ॥ १२ ॥
योगाभ्यासपरो भूत्वा ध्यायेत्पशुपतिं शिवम् ।
कृष्णाजिनी सोत्तरीयः शुक्लयज्ञोपवीतवान् ॥ १३ ॥

उपस्पृश्य स्नात्वा । उपपूर्वः स्पृशिः स्नाने प्रयुज्यते त्रिषवणमुदकोपस्पर्शी चतुर्थकालपानभक्तः स्यादित्यादौ । वायुभक्षः पवनाहारः । तदशक्तौ पयःप्रभृति शक्त्यनुसारेण कुर्यादित्यर्थः । स्मर्यते हि—

'मूलं फलं पय आपो वायुराकाश इति । उत्तरमुत्तरं ज्यायः' इति । अब्द-

मध्यम एकस्यान्द्स्य संवत्सरस्य मध्ये सदा वायुमेव भक्षयतित्यर्थः ॥ ११ ॥ ॥ १२ ॥ १३ ॥

अथवाऽग्नीन्समारोप्य स्वात्मनि ध्यानतत्परः ।
अनग्निरनिकेतः स्यान्मुनिर्मोक्षपरो भवेत् ॥ १४ ॥

अधुना चतुर्थपक्षमाह । अथवाऽग्नीनित्यादि । स्मर्यते हि—
'आत्मन्यग्नीन्समारोप्य ब्राह्मणः प्रव्रजेद्गृहात्' इति ।
"अनग्निरनिकेतः स्यादशर्मोऽशरणो मुनिः" इत्यापस्तम्बोऽप्याह ॥ १४ ॥

सदोपनिषदभ्यासपरो वा स्यात्समाहितः ।
त्रिपुण्ड्रोद्धूलनं कुर्याद्गृहस्थस्योक्तमन्त्रतः ॥ १५ ॥

गृहस्थस्येति । गृहस्थस्य च उक्तत्र्यम्बकमन्त्रः समणवः पञ्चाक्षरश्च तेनेत्यर्थः ॥ १५ ॥

यदा वैराग्यमुत्पन्नं तदैव प्रव्रजेद्वनी ।
बहूदके वा हंसे वा मुमुक्षुः परहंसके ॥ १६ ॥

यदेति । एषा च प्रव्रज्या सत्येव वैराग्ये कार्या । बहूदके वेतिवचनात्प्राक्तनी कुटीचकविषया कुटीचकबहूदकादिचातुर्विध्यं च वक्ष्यमाणतत्तद्धर्मानुष्ठानसामर्थ्यानुसारेण व्यवस्थया विकल्प्यते ॥ १६ ॥

सर्वं संग्रहरूपेण सम्यगुक्तं बृहस्पते ।
तस्मात्सर्वप्रयत्नेन श्रद्धया विद्धि सुव्रत ॥ १७ ॥

इति श्रीसूतसंहितायां ज्ञानयोगखण्डे वानप्रस्थाश्रमविधिनिरूपणं नाम पञ्चमोऽध्यायः ॥ ५ ॥

संग्रहरूपेणेति । संन्यासभेदानामुद्देशमात्रमत्र वनस्थेनानुष्ठेयतया वनस्थधर्माध्याये कथितम् । संन्यासधर्मप्रपञ्चस्त्वनन्तराध्याये वक्ष्यते ॥ १७ ॥

इति श्रीसूतसंहितातात्पर्यदीपिकायां ज्ञानयोगखण्डे वानप्रस्थाश्रमविधिनिरूपणं नाम पञ्चमोऽध्यायः ॥ ५ ॥

---

( अथ षष्ठोऽध्यायः )

ईश्वर उवाच—

अथातः संप्रवक्ष्यामि संन्यासं मुनिसत्तम ।
चतुर्विधास्तु विज्ञेया भिक्षवो वृत्तिभेदतः ॥ १ ॥
कुटीचको मुनिश्रेष्ठस्तथैव च बहूदकः ।
हंसः परमहंसश्च तेषां वृत्तिं वदामि ते ॥ २ ॥

पञ्चत्रयप्रसङ्गेनोद्दिष्टमेव कुटीचकादिचतुष्टयं तद्धर्माभिधानाय पुनरनुवदति । अथात इति । अत उक्तमाश्रमत्रयं धर्मस्कन्धः सांसारिकफलविषय एव । श्रूयते हि—त्रयो धर्मस्कन्धा यज्ञोऽध्ययनं दानमिति । प्रथमस्तप एव । द्वितीयो ब्रह्मचार्याचार्यकुलवासी । तृतीयोऽत्यन्तमात्मानमाचार्यकुलेऽवसादयन्सर्वे एते पुण्यलोका भवन्तीति । अतस्ततो विरक्तस्यानन्तरमपुनरावृत्तिरूपब्रह्मप्राप्तये ज्ञानस्कन्धः संन्यास उच्यते । श्रूयते हि—" ब्रह्मसंस्थोऽमृतत्वमेति " इति । ब्रह्मणि[1] संस्था सम्यङ्निष्ठा यस्य चतुर्थाश्रमिणः स ब्रह्मसंस्थः स एवामृतत्वमपवर्गं प्राप्नोति । आश्रमान्तरस्थस्यापि ब्रह्मसंस्थां वसंभवं द्वीपस्य परिहृतं हि तत्त्वविद्भिः—

"लोककाम्याश्रमी ब्रह्मनिष्ठामर्हति वा न वा ।
यथावकाशं[2] ब्रह्मैव ज्ञातुमर्हत्यवारणात् ॥
अनन्यचित्तता ब्रह्मनिष्ठाऽसौ, कर्मिणे कथम् ।
कर्मत्यागी ततो ब्रह्मनिष्ठामर्हति नेतरः" इति ।

विदर्शं चैतत्तैरेव त्रयो धर्मस्कन्धा इत्यत्राऽऽश्रमानधिकृत्य "सर्वे एते पुण्यलोका भवन्ति" इति । आश्रमानुष्ठायिनां पुण्यलोकमभिधाय "ब्रह्मसंस्थोऽमृतत्वमेति" इति मोक्षसाधनत्वेन ब्रह्मनिष्ठा प्रतिपाद्यते । सेयं ब्रह्मनिष्ठा पुण्यलोककामिन आश्रमिणोऽपि संभाव्यते । आश्रमकर्माण्यनुष्ठाय यथावकाशं ब्रह्मनिष्ठायाः कर्तुं सुकरत्वात् । न हि लोककामी ब्रह्म न जानीयादिति निषेधोऽस्ति[3], तस्मादस्ति सर्वेष्वाऽऽश्रमिणो ब्रह्मनिष्ठेति प्राप्ते ब्रूमः—ब्रह्मनिष्ठा नाम सर्वव्यापारपरित्यागेनानन्यचित्ततया ब्रह्मणि समाधिः । न चासौ कर्मशूरे संभ-

१ ङ 'स्थाव' । २ ङ. 'नम्य' । ३ ङ. 'प्यमो म' । ४ ङ. हंसस्य । ५ ङ. 'शोकनामि' । ६ ग ङ 'स्ति म' ।

यति कर्मानुष्ठानत्यागयोः परस्परविरोधात् । तस्मात्कर्मत्यागेन एव ब्रह्मनिष्ठेति । वृत्तिभेदत इति । आचारभेदतः ॥ १ ॥ २ ॥

कुटीचकश्च संन्यस्य स्वे स्वे वेश्मनि नित्यशः ।
भिक्षामादाय भुञ्जीत स्वबन्धूनां गृहेऽथवा ॥ ३ ॥
शिखी यज्ञोपवीती स्यात्त्रिदण्डी सकमण्डलुः ।
सपवित्रश्च काषायी गायत्रीं च जपेत्सदा ॥ ४ ॥
सर्वाङ्गोद्धूलनं कुर्यात्त्रिपुण्ड्रं च त्रिसंधिषु ।
शिवलिङ्गार्चनं कुर्याच्छ्रद्धयैव दिने दिने ॥ ५ ॥

तत्र कुटीचकस्य वृत्तिमाह—कुटीचकश्चेति ॥ ३ ॥ ४ ॥ ५ ॥

बहूदकश्च संन्यस्य बन्धुपुत्रादिवर्जितः ।
सप्तागारं चरेद्भैक्ष्यमेकान्नं परिवर्जयेत् ॥ ६ ॥

बहूदकस्य वृत्तिमाह—बहूदकश्चेति ॥ ६ ॥

गोवालरज्जुसंबद्धं त्रिदण्डं शिक्यमद्भुतम् ।
पात्रं जलपवित्रं च कौपीनं च कमण्डलुम् ॥ ७ ॥
आच्छादनं तथा कन्था पादुकां छत्रमद्भुतम् ।
पवित्रमजिनं सूचीं पक्षिणीमक्षसूत्रकम् ॥ ८ ॥

जलपवित्रं जलशोधनवस्त्रम् ॥ ७ ॥ ८ ॥

योगपट्टं बहिर्वस्त्रं मृत्खनित्रीं कृपाणिकाम् ।
सर्वाङ्गोद्धूलनं तद्वत्त्रिपुण्ड्रं चैव धारयेत् ॥ ९ ॥

मृत्खनित्रीमिति । मृत्खन्यते यया स्नानाद्यर्थं तां कृपाणिकां कृपाणाकारतीक्ष्णलोहघटितां यष्टिम् ॥ ९ ॥

शिखी यज्ञोपवीती च देवताराधने रतः ।
स्वाध्यायी सर्वदा वाचमुत्सृजेत्स्थानतत्परः ॥ १० ॥

स्वाध्यायीति । स्वाध्याय एवोत्सृज्यमानो वाचमित्यापस्तम्बः ॥ १० ॥

संध्याकालेषु सावित्रीं जपन्कर्म समाचरेत् ।
हंसः कमण्डलुं शिक्यं भिक्षापात्रं तथैव च ॥ ११ ॥
कन्थां कौपीनमाच्छायमङ्गवस्त्रं बहिःपटम् ।
एकं तु वैणवं दण्डं धारयेन्नित्यमादरात् ॥ १२ ॥
त्रिपुण्ड्रोद्धूलनं कुर्याच्छिवलिङ्गं समर्चयेत् ।
अष्टग्रासं सकृन्नित्यमश्नीयात्तत्सशिखं भवेत् ॥ १३ ॥
संध्याकालेषु सावित्रीजपमध्यात्मचिन्तनम् ।
तीर्थसेवां तथा कृच्छ्रं तथा चान्द्रायणादिकम् ॥ १४ ॥

हंसस्य वृत्तिमाह—हंसः कमण्डलुमिति ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥

कुर्वन्ग्रामैकरात्रेण न्यायेनैव समाचरेत् ।
परहंसस्त्रिदण्डं च रज्जुं गोवालनिर्मितम् ॥ १५ ॥
शिक्यं जलपवित्रं च पवित्रं च कमण्डलुम् ।
पक्षिणीमजिनं सूचीं मृत्खनित्रीं कृपाणिकाम् ॥ १६ ॥
शिखां यज्ञोपवीतं च नित्यकर्म परित्यजेत् ।
कौपीनाच्छादनं वस्त्रं कन्थां शीतनिवारिकाम् ॥ १७ ॥
योगपट्टं बहिर्वस्त्रं पादुकां छत्रमद्भुतम् ।
अक्षमालां च गृह्णीयाद्वैणवं दण्डमव्रणम् ॥ १८ ॥

परमहंसस्याऽऽह—परहंसस्त्रिदण्डमिति ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥

अग्निरित्यादिभिर्मन्त्रैः कुर्यादुद्धूलनं मुदा ।
ओमोमिति च त्रिः प्रोच्य परहंसस्त्रिपुण्ड्रकम् ॥ १९ ॥

ओमोमिति । अजपासहितेन प्रणवेन त्रिरुक्तेन त्रिपुण्ड्रं कुर्यात् ॥ १९ ॥

मृत्पात्रं कांस्यपात्रं वा दारुपात्रं च वैणवम् ।
पाणिपात्रं च गृह्णीयादाचम्यैव तथोदरम् ॥ २० ॥

हेयोपादेयविभागविवक्षया प्रथमं सामान्येन संभवत्पात्रजातमुद्दिशति—

१ ड. पिबेत् । २ क. ख. घ. °रुद्र° । ३ ङ. °भवात्पा° ।

मृत्पात्रमिति । एतच्चालाबुपात्रस्याप्युपलक्षणम् । 'मृत्पात्रमलाबुपात्रं दारुपात्रं वा' इत्यारुणिश्रुतेः । उद्दिष्टमध्य उपादेयमाह—दारुपात्रमिति । एतच्च कांस्यव्यतिरिक्तस्योक्तस्योपलक्षणम् । उपादेयमन्यदपि समुच्चिनोति—तथोदरमिति ॥ २० ॥

बहूदकानां हंसानां पाणिपात्रं तथोदरम् ।
कांस्यपात्रं न विध्युक्तं मृत्पात्रमिति हि श्रुतिः ॥ २१ ॥
माधूकरमथैकान्नं परहंसः समाचरेत् ।
नात्यश्नतस्तु योगोऽस्ति न चैकान्तमनश्नतः ॥ २२ ॥
तस्माद्योगानुगुण्येन भुञ्जीत परहंसकः ।
अभिशस्तं समुत्सृज्य सार्ववर्णिकमाचरेत् ॥ २३ ॥
उत्तरोत्तरलाभे तु पूर्वं पूर्वं परित्यजेत् ।
गुरुशुश्रूषया नित्यमात्मज्ञानं समभ्यसेत् ॥ २४ ॥

एतच्च न केवलं परमहंसानामेवेत्याह—बहूदकानामिति । पात्रान्तरमपि समुच्चिनोति—पाणिपात्रमिति । यथोदरं तथा पाणिपात्रं चेत्यर्थः । तथा चाऽऽरुणिश्रुतिः—'पाणिपात्रमुदरपात्रं च' इति । उपादेयमभिधाय हेयमाह—कांस्यपात्रं नेति । मृत्पात्रमिति हि श्रुतिरिति यथोदीरितारुणिश्रुतिः ॥ २१ ॥ ॥ २२ ॥ २३ ॥ २४ ॥

स्नानं शौचमभिध्यानं सत्यानृतविवर्जनम् ।
कामक्रोधपरित्यागं हर्षरोषविवर्जनम् ॥ २५ ॥

सत्यानृतविवर्जनमिति । असत्यवत्सत्यमपि व्यवहारं शक्यं विवर्जयेत् । विक्षेपकत्वाविशेषादित्यर्थः । श्रूयते हि—'तमेवैकं जानथ आत्मानमन्या वाचो विमुञ्चथ' इति । स्मर्यते च—

"त्यज धर्ममधर्मं च उभे सत्यानृते त्यज ।
उभे सत्यानृते त्यक्त्वा येन त्यजसि तं त्यज" ।

इति ॥ २५ ॥

---

१ ग. °विश्वतो° । २ क. °र्वनिष । ३ क. जानीथ । ४ ग. °सि तत्त्यज ।

लोभमोहपरित्यागं दम्भदर्पविवर्जनम् ।
चातुर्मास्यं च सर्वेषां वदन्ति ब्रह्मवादिनः ॥ २६ ॥

चातुर्मास्यमिति । वर्षास्वेकत्र वासं चत्वारो मासाश्चातुर्मास्यम् । तद्धितार्थे द्विगुः । 'चतुर्वर्णादिभ्यः स्वार्थे' इति ष्यञ् ॥ २६ ॥

कुटीचकाश्च हंसाश्च तथैव च बहूदकाः ।
सावित्रीमात्रसंपन्ना भवेयुर्मोक्षकारणात् ॥ २७ ॥

सर्वेषां चतुर्विधानां यतीनां परमहंसव्यतिरिक्तस्य प्रधानं जप्यमाह—कुटीचका इति । मोक्षं प्रयोजनमुद्दिश्य सावित्र्यैव तत्त्वमनुसंदध्युरित्यर्थः ॥ २७ ॥

प्रणवाद्याख्रयो वेदाः प्रणवे पर्यवस्थिताः ।
तस्मात्प्रणवमेवैकं परहंसः सदा जपेत् ॥ २८ ॥

परमहंसस्य प्रणवैकनिष्ठतां विवक्षुः प्रणवस्योत्कृष्टतामाह—प्रणवाद्या इति । ओमिति ब्राह्मणः प्रवक्ष्यन्नाह " ब्रह्मोपाप्नवानीति " " ब्रह्मैवोपाप्नोति " इति श्रुतेः । प्रणवे पर्यवस्थिता इति । प्रणवस्य वेदत्रयसारत्वाच्चरमतीतिनिधित्वम् । तथात्वं च श्रूयते छान्दोग्योपनिषदि बह्वृचब्राह्मणे च । लोकदेववेदव्याहृत्यस्तत्रयसारत्वं प्रणवस्य । तैत्तिरीयोपनिषदि च ब्रह्मयज्ञप्रकरणे "ओमिति प्रपद्यत एतद्वै यजुस्त्रयीं विद्यां प्रति " इति ॥ २८ ॥

संध्याकालेषु शुद्धात्मा प्रणवेन समाहितः ।
षट्प्राणायामकं कुर्याज्जपेदष्टोत्तरं शतम् ॥ २९ ॥
विविक्तदेशमाश्रित्य सुखासीनः समाहितः ।
यथाशक्ति समाधिस्थो भवेत्संन्यासिनां वरः ॥ ३० ॥

षडिति । षण्णां प्राणायामानां समाहारः षट्प्राणायामम् । 'पात्रादिभ्यः प्रतिषेधः' इति न ङीप् । स्वार्थे कप्रत्ययः ॥ २९ ॥ ३० ॥

क्रमाद्वाऽक्रमतो विद्वानुत्तमां वृत्तिमाश्रयेत् ।
उत्तमां वृत्तिमापन्नो न नीचां वृत्तिमाश्रयेत् ॥ ३१ ॥

क्रमादिति । " ब्रह्मचर्यं समाप्य गृही भवेद्गृहाद्वनी भूत्वा प्रव्रजेत् " इति

१ च "दशतीति" । २ क ख ग ङ मन्त्रादिभ्यः ।

जाबालश्रुतिः । अक्रमतो वेति । "यदि वेतरथा ब्रह्मचर्यादेव प्रव्रजेद्गृहाद्वा" इति तत्रैव ॥ ३१ ॥

उत्तमां वृत्तिमाश्रित्य नीचां वृत्तिं समाश्रितः ।
आरूढपतितो ज्ञेयः सर्वधर्मबहिष्कृतः ॥ ३२ ॥
प्रव्रजन्तं द्विजं दृष्ट्वा स्थानाच्चलति भास्करः ।
एष मे मण्डलं भित्त्वा ब्रह्मलोकं गमिष्यति ॥ ३३ ॥
रूपं तु द्विविधं प्रोक्तं चरं वाऽचरमेव च ।
चरं संन्यासिनां रूपमचरं मृन्मयादिकम् ॥ ३४ ॥
यस्याऽऽश्रमे यतिर्नित्यं वर्तते मुनिसत्तम ।
न तस्य दुर्लभं किंचित्त्रिषु लोकेषु विद्यते ॥ ३५ ॥
दुर्वृत्तो वा सुवृत्तो वा मूर्खो वा पण्डितोऽपि वा ।
वेषमात्रेण संन्यासी पूज्यः सर्वेश्वरो यथा ॥ ३६ ॥
ब्रह्मचर्याश्रमस्थानां ब्रह्मा देवः प्रकीर्तितः ।
गृहस्थानां च सर्वे स्युर्यतीनां तु महेश्वरः ॥ ३७ ॥
वानप्रस्थाश्रमस्थानामादित्यो देवता मता ।
तस्मात्सर्वेषु कालेषु पूज्यः संन्यासिनां हरः ॥ ३८ ॥
मृते न दहनं कार्यं परहंसस्य सर्वदा ।
कर्तव्यं खननं तस्य नाशौचं नोदकक्रिया ॥ ३९ ॥

॥३२॥३३॥३४॥३५॥३६॥३७॥३८॥३९॥

अश्वत्थस्थापनं कार्यं तद्देशेऽध्वर्युणा मुने ।
अश्वत्थे स्थापिते तेन स्थापितो हि महेश्वरः ॥ ४० ॥
दर्शनात्स्पर्शनात्तस्य सर्वं नश्यति पातकम् ।
अन्येषामपि भिक्षूणां खननं पूर्वमाचरेत् ॥ ४१ ॥

---

१ ग. "कालेषु" । २ ख. "र्वकर्म" । ३ ख. च ।

पश्चाद्गृही यथाशास्त्रं कुर्याद्दहनमुत्तमम् ।
अश्वमेधफलं तस्य स्नानमात्राद्विशुद्धता ॥ ४२ ॥
सर्वमुक्तं समासेन तव शिष्यस्य धीमतः ।
तस्मादेतद्विजानीहि वेदान्तार्थप्रकाशनम् ॥ ४३ ॥

इति श्रीसूतसंहितायां ज्ञानयोगखण्डे संन्यासविधि-
निरूपणं नाम षष्ठोऽध्यायः ॥ ६ ॥

अश्वत्थे स्थापित इति । तेनाध्वर्युणा । तत्राश्वत्थस्य स्थापनमात्रेणाः शिवलिङ्गस्थापनेन यत्फलं तल्लभ्यत इत्यर्थः । तस्य प्रकृतस्य तस्मिन्स्था स्थापितस्याश्वत्थस्य महेश्वरस्य वा दर्शनस्पर्शनाभ्यां सर्वपातकनाश इत्यर्थ ॥ ४० ॥ ४१ ॥ ४२ ॥ ४३ ॥

इति श्रीसूतसंहितातात्पर्यदीपिकायां ज्ञानयोगखण्डे संन्यासविधिनि-
रूपणं नाम षष्ठोऽध्यायः ॥ ६ ॥

( अथ सप्तमोऽध्यायः )

ईश्वर उवाच-

अथातः संप्रवक्ष्यामि प्रायश्चित्तं समासतः ।
दोषाणामपनुत्त्यर्थं सर्वभूतानुकम्पया ॥ १ ॥

नित्यधर्माभिधानानन्तरं नैमित्तिकधर्माभिधानायाध्यायान्तरमारभ्यते— अथात इति । यत उक्तस्य विधिनिषेधात्मकस्य नित्यस्य धर्मस्य प्रमादादिना व्यतिक्रमे तन्निमित्तप्रायश्चित्तापेक्षाऽतो नित्यानन्तरं तदुच्यत इत्यर्थः ॥ १ ॥

ब्रह्महा मद्यपः स्तेनस्तथैव गुरुतल्पगः ।
एते वेदविदां श्रेष्ठा महापातकिनः स्मृताः ॥ २ ॥

अपनोदनीयान्प्रधानदोषाननुक्रामति–ब्रह्महेति। तथाच च्छान्दोग्योपनिषदि "स्तेनो हिरण्यस्य सुरां पिबंश्च गुरोस्तल्पमावसन्ब्रह्महा चैते पतन्ति चत्वारः पञ्चमश्चाऽऽचरंस्तैः" इति ॥ २ ॥

---

१ ङ. प. । २ ङ. °स्मे ।

एभिः सह वसेद्यस्तु संवत्सरमसावपि ।
ब्रह्महा निर्जनेऽरण्ये कुटीं कृत्वा वसेन्नरः ॥ ३ ॥
द्वादशाब्दानि संतप्तः सर्वदा विजितेन्द्रियः ।
भिक्षामाहृत्य भुञ्जीत स्वदोषं ख्यापयन्नृणाम् ॥ ४ ॥

वसेदिति वचनात्सहवासादिनैव संवत्सरात्पातित्यम् । याजनाध्यापनयौनसंबन्धैस्तु सद्यः पातित्यम् । यदाह याज्ञवल्क्यः—

"संवत्सरेण पतति पतितेन सहाऽऽचरन् ।
याजनाध्यापनाद्यौनान्न तु यानाशनादिभिः" ॥ इति ॥

उक्तनिमित्तानामुद्देशक्रमेण प्रायश्चित्तान्याह—ब्रह्महा निर्जन इत्यादि ॥ ३ ॥ भुञ्जीतेति ॥ ४ ॥

शाकमूलफलाशी वा कृत्वा शवशिरोध्वजम् ।
संपूर्णे द्वादशे वर्षे ब्रह्महत्यां व्यपोहति ॥ ५ ॥
अकामकृतदोषस्य प्रायश्चित्तमिदं मुने ।
कामतश्चेन्मुनिश्रेष्ठ प्राणान्तिकमुदीरितम् ॥ ६ ॥
अथवा मुनिशार्दूल पापशुद्ध्यर्थमात्मनः ।
ग्रामादनलमाहृत्य प्रविशेत्परितापतः ॥ ७ ॥
पश्चादनशनो भूत्वा धर्मयुद्धेऽथ वाऽनले ।
अप्सु वा मुनिशार्दूल महाप्रस्थानकेऽपि वा ॥ ८ ॥
ब्राह्मणार्थे गवार्थे वा सम्यक्प्राणान्परित्यजेत् ।
सुरापानादिदोषोऽपि नश्यत्येतेन सुव्रत ॥ ९ ॥
अग्निवर्णां सुरां तप्तां प्राणविच्छेदनक्षमाम् ।
पीत्वा नष्टशरीरस्तु सुरापानात्प्रमुच्यते ॥ १० ॥
गोमूत्रं वा घृतं तोयं गोशकृद्रसमेव वा ।
अतितप्तं पिबेत्तेन मृतो मुच्येत दोषतः ॥ ११ ॥

---

१ घ. ङ. °वसेन्नु° । २ ग. °म् । यज° । ३ घ. ङ °नयोनिभिं° । ४ ख. °नाद्यत्प्रा-नाशनासनात्° इ° । ५ घ. उक्तानि नि° । ६ ग. °नास्मुहे° । ७ ङ. °तःक्षितः । ८ ग. °स्पते ते° ।

सुवर्णस्तेयकृत्साक्षाद्राजानमभिगम्य तु ।
स्वकर्म ख्यापयन्ब्रूयान्मां भवाननुशास्त्विति ॥ १२ ॥
आयसं मुसलं तीक्ष्णं गृहीत्वा स्वयमेव तु ।
हन्यात्सकृत्प्रयोगेण राजा तं पुरुषाधमम् ॥ १३ ॥

शवशिरोध्वजमिति । स्मर्यते हि—
'शिरःकपाली ध्वजवान्भिक्षाशी कर्म वेदयन्' इति ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥

मुच्यते स्तेयदोषेण नास्ति राज्ञोऽपि पातकम् ।
अवगूहेत्स्त्रियं तप्तामयसा निर्मितां नरः ॥ १४ ॥
स्वयं वा शिश्नवृषणावुत्कृत्याऽऽधाय चाञ्जलौ ।
दक्षिणां दिशमागच्छेद्यावत्प्राणविमोचनम् ॥ १५ ॥

अवगूहेदिति । आश्लिष्येत् ॥ १४ ॥ १५ ॥

अनेन विधिना युक्तो मुच्यते गुरुतल्पगः ।
तप्तकृच्छ्रं चरेत्ततः संवत्सरमतन्द्रितः ॥ १६ ॥
महापातकिनां नृणां संसर्गात्स विमुच्यते ।
मातरं मातृसदृशीं भागिनेयीं तथैव च ॥ १७ ॥

तप्तकृच्छ्रमिति । तप्तकृच्छ्रलक्षणमुक्तं यमेन—

'त्र्यहमुष्णं पिबेदम्भस्त्र्यहमुष्णं पयः पिबेत् ।
त्र्यहमुष्णं पिबेत्सर्पिर्वायुभक्षः परं त्र्यहम् ॥
तप्तकृच्छ्रं विजानीयाच्छीते शीतमुदाहृतम्' इति ।

अम्भःप्रभृतीनां परिमाणमुक्तं पराशरेण—
'षट्पलं तु पिबेदम्भस्त्रिपलं तु पयः पिबेत् ।
पलमेकं पिबेत्सर्पिस्तप्तकृच्छ्रं विधीयते' इति ॥ १६ ॥ १७ ॥

मातृष्वसारमारुह्य कुर्यात्कृच्छ्रातिकृच्छ्रकौ ।
चान्द्रायणं च कुर्वीत तस्याः पापनिवृत्तये ॥ १८ ॥

कृच्छ्रातिकृच्छ्रकाविति । द्विरावृत्तं कृच्छ्रातिकृच्छ्रं कुर्यात् । तल्लक्षणमुक्तं याज्ञवल्क्येन—

'कृच्छ्रातिकृच्छ्रः पयसा दिवसानेकविंशतिम्' इति ।

एकभक्तनक्तायाचितदिवसेषु यो भोजनकालस्तस्मिन्नेव काले केवलमुदकेन वा वर्तनं कृच्छ्रातिकृच्छ्रो भवतीत्यर्थः ॥ १८ ॥

स्वसारं मुनिशार्दूल गत्वा दुहितरं तु वा ।
कृच्छ्रं सांतपनं कुर्याद्दोषशुद्ध्यर्थमात्मनः ॥ १९ ॥

कृच्छ्रं सांतपनमिति । तल्लक्षणमाह याज्ञवल्क्यः—
"गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकम् ।
एकरात्रं चोपवसेत्कृच्छ्रं सांतपनं भवेत्" इति ॥ १९ ॥

भ्रातृभार्याभिगमने चान्द्रायणचतुष्टयम् ।
चरेत्पापविशुद्ध्यर्थं संतप्तो ब्राह्मणोत्तमः ॥ २० ॥
पैतृष्वसेयीगमने मातुलादुत्थितां स्त्रियम् ।
चान्द्रायणं चरेदेकं कामतोऽकामतोऽपि वा ॥ २१ ॥
अवशिष्टासु सर्वासु द्विजस्त्रीषु महामुने ।
गत्वा कृच्छ्रं चरेत्तप्तमेकं तद्दोषशान्तये ॥ २२ ॥
क्षत्रियाणां च वैश्यानां स्त्रीषु गत्वा द्विजश्चरेत् ।
कृच्छ्रमन्यासु बहुशो गत्वा कृच्छ्रं चरेद्द्विजः ॥ २३ ॥
ब्रह्मचारी स्त्रियं गत्वा कामतो मुनिसत्तम ।
संवत्सरं चरेद्भैक्षं धृत्वा गर्दभाजिनम् ॥ २४ ॥
स्वपापकीर्तनं कुर्वन्स्नात्वा त्रिषवणं पुनः ।
तस्मात्पापात्प्रमुच्येत षण्मासा कामवर्जितः ॥ २५ ॥
अग्निकार्यपरित्यागे रेतोत्सर्गे समाहितः ।
स्नात्वा प्रणवसंयुक्ता व्याहृतीश्च तथैव च ॥ २६ ॥
सावित्रीं सशिरां मौनी जपेदयुतमादरात् ।
यतीनामिन्द्रियोत्सर्गे स्नात्वा शुद्धः समाहितः ॥ २७ ॥

---

१ क. ग. °लेन° । १ ख. °त्सृज° । २ ख. दुर्जितमा ।

प्रणवं परमात्मानं जपेद्युतमादरात् ।
द्विजस्त्रीगमने भिक्षुरवकीर्णिव्रतं चरेत् ॥ २८ ॥
अन्यासु बुद्धिपूर्वं चेत्तप्तकृच्छ्रं समाचरेत् ।
हत्वा वैश्यं च राजानं ब्रह्महत्याव्रतं चरेत् ॥ २९ ॥
क्रमान्मासत्रयं पूर्वं षाण्मासिकमनन्तरम् ।
ब्राह्मणस्तु विमुच्येत शूद्रं हत्वाऽर्धमासतः ॥ ३० ॥
विहिताकरणे तद्वत्प्रतिषिद्धातिसेवने ।
वेदविप्लावने चैव गुरुद्रोहेऽन्यकर्मणि ॥ ३१ ॥
तप्तकृच्छ्रं चरेत्तेन मुच्यते सर्वदोषतः ।
अथ वा सर्वपापानां विशुद्ध्यर्थं समाहितः ॥ ३२ ॥
कुर्वञ्शुश्रूषणं नित्यं वेदान्तज्ञानभाषिणाम् ।
श्रद्धाविनयसंयुक्तः शान्तिदान्त्यादिसंयुतः ॥ ३३ ॥

॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥२८॥२९॥
॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥

यावज्ज्ञानोदयं तावद्वेदान्तार्थं निरूपयेत् ।
नास्ति ज्ञानात्परं किंचित्पापकान्तारदाहकम् ॥ ३४ ॥
मासमात्राद्विनश्यन्ति क्षुद्रपापानि सुव्रत ।
षण्मासश्रवणात्सर्वं नश्यत्येवोपपातकम् ॥ ३५ ॥
महापातकसंघाश्च नित्यं वेदान्तसेवनात् ।
नश्यन्ति वत्सरात्सर्वे सत्यमुक्तं बृहस्पते ॥ ३६ ॥

नास्ति ज्ञानादिति । उक्तं गीतासु—
"यथैधांसि समिद्धोऽग्निर्भस्मसात्कुरुतेऽर्जुन ।
ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथा" ॥इति॥३४॥३५॥३६॥

यः श्रद्धया युतो नित्यं वेदान्तज्ञानमभ्यसेत् ।
तस्य संसारविच्छित्तिः श्रवणादिति हि श्रुतिः ॥ ३७ ॥

---

१ ... ग. "वै सुधा" । २ ङ. निरूपयेत् ।

यः श्रद्धयेति । श्रवणाच्छ्रद्धेशक्तितात्पर्यावधारणन्यायानुसंधानमुखेन वेदान्तज्ञानमभ्यसेत् । तस्य संसारविच्छित्तिरित्यस्मिन्नर्थे श्रुतिरस्तीत्यर्थः । सा चेयम्—

"वेदान्तविज्ञानसुनिश्चितार्थाः संन्यासयोगाद्यतयः शुद्धसत्त्वाः ।
ते ब्रह्मलोके तु परान्तकाले परामृतात्परिमुच्यन्ति सर्वे" इति ॥३७॥

एवमभ्यसतस्तस्य यदि विघ्नोऽभिजायते ।
सर्वलोकान्क्रमाद्भुक्त्वा भूमौ विप्रोऽभिजायते ॥ ३८ ॥

एवमभ्यसत इति । अर्जुनं प्रति भगवतोक्तम्—

"प्राप्य पुण्यकृतांल्लोकानुषित्वा शाश्वतीः समाः ।
शुचीनां श्रीमतां गेहे योगभ्रष्टोऽभिजायते" इति ॥ ३८ ॥

सर्वलक्षणसंपन्नः शान्तः सत्यपरायणः ।
पुनश्च पूर्वसंस्कारेन विद्वांसं पर्युपासते ॥ ३९ ॥

नश्चेति ।

'पूर्वाभ्यासेन तेनैव ह्रियते ह्यवशोऽपि सः" इति ।

पर्युपासते । पर्युपास्ते । शपो लुगभावश्छान्दसः ॥ ३९ ॥

तत्संपर्कात्स्वमात्मानमपरोक्षीकृतो मुनिः ।
स्वमादिव विमुच्येत स्वसंसारमहोदधेः ॥ ४० ॥
तस्मात्सर्वप्रयत्नेन स्वमुक्त्यर्थं बृहस्पते ।
सर्वदा सर्वमुत्सृज्य वेदान्तश्रवणं कुरु ॥ ४१ ॥

इति श्रीसूतसंहितायां ज्ञानयोगखण्डे प्रायश्चित्तविधिनिरूपणं नाम सप्तमोऽध्यायः ॥ ७ ॥

अपरोक्षीकृत इति । संपदादित्वाद्भावे क्विप् । आत्मानं प्रति यदपरोक्षीकरणं तस्मादित्यर्थः ॥ ४० ॥ ४१ ॥

इति श्रीसूतसंहितातात्पर्यदीपिकायां ज्ञानयोगखण्डे प्रायश्चित्तविधिनिरूपणं नाम सप्तमोऽध्यायः ॥ ७ ॥

१ क. ख. ट. "स्वात" ।

( अथाष्टमोऽध्यायः )

ईश्वर उवाच—

अथातः संप्रवक्ष्यामि दानधर्मफलं मुने ।
सर्वेषामेव दानानां विद्यादानं परं स्मृतम् ॥ १ ॥
विद्यया प्राणिनां मुक्तिस्तस्मात्तद्दानमुत्तमम् ।
भूमिदानं च गोदानमर्थदानं तथैव च । ॥ २ ॥
कन्यादानं च मुख्यं स्यादन्नदानं तथैव च ।
धनधान्यसमृद्धां यो भूमिं दद्याद्द्विजाय सः ॥ ३ ॥
इह लोके सुखी भूत्वा प्रेत्य चाऽऽनन्त्यमश्नुते ।
अरत्निमात्रां वा भूमिं दद्याद्ब्रह्मविदे नरः ॥ ४ ॥

उक्तप्रायश्चित्तैः परिहृतप्रतिबन्धकपापजालस्य पुरुषस्य यैर्यैर्दानैर्धर्मैश्च यानि यानि फलानि प्राप्यन्ते तानि तानि वक्तुं प्रतिजानीते—अथात इति । यतः प्रतिबन्धकापगमे सत्येव साधनं स्वकार्ये समर्थमतः प्रायश्चित्तानन्तरमित्यर्थः ॥ १ ॥ २ ॥ ३ ॥ ४ ॥

सर्वपापविनिर्मुक्तः संसारप्रतिवर्तते ।
विनीतायोपसन्नाय विप्राय श्रद्धया युतः ॥ ५ ॥
यो दद्याद्वेदिकीं विद्यां न स भूयोऽभिजायते ।
यतये श्रद्धया नित्यमन्नं दद्याद्यथाबलम् ॥ ६ ॥
ब्रह्मलोकमवाप्नोति न पुनर्जायते भुवि ।
मठं वा यतये दद्यान्न स भूयोऽभिजायते ॥ ७ ॥

विनीतायोपसन्नायेति । श्रूयते हि—

"तस्मै स विद्वानुपसन्नाय सम्यक्प्रशान्तचित्ताय शमान्विताय ।
येनाक्षरं पुरुषं वेद सत्यं प्रोवाच तां तत्त्वतो ब्रह्मविद्याम्" इति ॥

विप्रायेति त्रैवर्णिकोपलक्षणम् । विद्याग्रहणाधिकारविभागो हि गतखण्डसप्तमाध्याये "निवृत्तिधर्मनिष्ठस्तु ब्राह्मणः" इत्यत्रोपवर्णित इति ॥५॥६॥७॥

१ क. °रमाहात्म्यमुत्तमम् । २ ख. °सं: प° । ३ ग. ङ. °पक्षणा° । ४ क. दुष्टस्वि ताय । ५ ख. सन्निपाद ।

अमावास्यां मुनिश्रेष्ठ ब्राह्मणायानसूयवे ।
अन्नं दद्यान्महादेवं समुद्दिश्य समाहितः ॥ ८ ॥
सोऽक्षय्यं फलमाप्नोति महादेवसमो भवेत् ।
यस्तु कृष्णचतुर्दश्यां श्रद्धाभक्तिसमन्वितः ॥ ९ ॥
आराधयेद्द्विजमुखे महादेवं स मुच्यते ।
त्रयोदश्यां तथा स्नात्वा ब्राह्मणं भोजयेन्मुदा ॥ १० ॥
ब्रह्मलोकमवाप्नोति ब्रह्मणा सह मुच्यते ।
द्वादश्यां तु द्विजः स्नात्वा विष्णुमुद्दिश्य भक्तितः ॥ ११ ॥
ब्राह्मणाय विनीताय दद्यादन्नं समाहितः ।
सर्वपापविनिर्मुक्तो विष्णुलोकं स गच्छति ॥ १२ ॥

तिथिदेवताविशेषेणान्नदानफलान्याह—अमावास्यामित्यादिना । अमावास्यायाम् । "कालाध्वनोरत्यन्तसंयोगे" इति द्वितीया ॥८॥९॥१०॥११॥१२॥

एकादश्यामुपोष्यैव द्वादश्यां पक्षयोरपि ।
वासुदेवं समुद्दिश्य ब्राह्मणान्भोजयेन्नरः ॥ १३ ॥
सप्तजन्मकृतं पापं तत्क्षणादेव नश्यति ।
दशम्यामिन्द्रमुद्दिश्य यो दद्याद्ब्राह्मणे शुचौ ॥ १४ ॥
अन्नं वा तण्डुलं वाऽपि स देवेन्द्रमवाप्नुयात् ।
नवम्यां धर्मराजानमुद्दिश्य ब्राह्मणे शुचौ ॥ १५ ॥
अन्नं दद्याद्यथाशक्ति धर्मराजः प्रसीदति ।
अष्टम्यां शंकरं पूज्य ब्राह्मणं भोजयेन्नरः ॥ १६ ॥
सर्वपापविनिर्मुक्तः शिवसायुज्यमाप्नुयात् ।
सप्तम्यां चन्द्रमुद्दिश्य ब्राह्मणान्भोजयेद्द्विजः ॥ १७ ॥

---

१ क. °दद्यं क° । २ ङ. °मुखेनैव° । ३ ग. °फलभाक्° । ४ क. ख. ग. घ. °द्धर्मं लोक° । ५ ङ. °न्नं पूज° ।

चन्द्रलोकमवाप्नोति नात्र कार्या विचारणा ।
षष्ठ्यामादित्यमुद्दिश्य ब्राह्मणानेव भोजयेत् ॥ १८ ॥
सूर्यलोकमवाप्नोति सुखमक्षय्यमश्नुते ।
पञ्चम्यां पार्वतीं विप्रानुद्दिश्यान्नेन भोजयेत् ॥ १९ ॥
सर्वपापविनिर्मुक्तः सम्यग्ज्ञानमवाप्नुयात् ।
चतुर्थ्यां ब्राह्मणाञ्शुद्धाँल्लक्ष्मीमुद्दिश्य भोजयेत् ॥ २० ॥
दारिद्र्यं सकलं त्यक्त्वा महालक्ष्मीमवाप्नुयात् ।
तृतीयायां द्विजः स्नात्वा ब्राह्मणान्भोजयेत्सकृत् ॥२१॥
तस्य ब्रह्मा हरिश्चापि महादेवो वशो भवेत् ।
द्वितीयायां विशुद्धायां ब्राह्मणान्भोजयेन्नरः ॥ २२ ॥
तस्य वाचि सदा वेदा नृत्यन्ति स्म महामुने ।
सर्वपापविनिर्मुक्तः सम्यग्ज्ञानमवाप्नुयात् ॥ २३ ॥
प्रथमायां पवित्रायां परब्रह्मार्पणं द्विजः ।
यो ब्राह्मणमुखे कुर्याच्छ्रद्धाभक्तिसमन्वितः ॥ २४ ॥

पक्षयोरपीति। यत्तु 'शुक्लामेव सदा गृही' इति तद्गृहस्थोऽपि शुक्लां शुद्धां कामानुपहतामिति हि व्याचक्षते। यदाहुः—
"सकामानां गृहस्थानां काम्यव्रतनिषेधनात्" इति ॥ १३ ॥ १४ ॥१५॥ १६॥१७॥१८॥१९॥२०॥२१॥२२॥२३॥२४ ॥

स सर्वसमतामेत्य ब्रह्माप्येति सनातनम् ।
ब्राह्मणाय मुदा दद्याच्छुक्लां गामुत्तमां नरः ॥ २५ ॥
सर्वपापविनिर्मुक्तः साक्षाद्ब्रह्म स गच्छति ।
यो दद्यात्कन्यकां शुद्धां ब्राह्मणाय विभूषिताम् ॥
सर्वपापविनिर्मुक्तः शिवलोकं स गच्छति ॥ २६ ॥
येन केन प्रकारेण यं यं देवं समर्चयेत् ।
तं तं देवं समाप्नोति नात्र कार्या विचारणा ॥ २७ ॥

१ क. °णान्भोजयेद्द्विजः ॥ १८ ॥ सू° । २ ख. मिला । ३ क. ख. °येन्नरः ।

स सर्वसमतामिति ।

" सुहृन्मित्रार्युदासीनमध्यस्थद्वेष्यबन्धुषु ।
साधुष्वपि च पापेषु समबुद्धिर्विशिष्यते ॥
निर्दोषं हि समं ब्रह्म तस्माद्ब्रह्मणि ते स्थिताः "

इति गीतासु ॥ २५ ॥ २६ ॥ २७ ॥

यं यं कामयते लोकं तं तमुद्दिश्य भक्तिमान् ॥
आत्मज्ञं ह्यर्चयेदित्यमात्मज्ञमिति हि श्रुतिः ॥ २८ ॥

आत्मज्ञमिति हि श्रुतिरिति । मुण्डकोपनिषदि—

" यं यं लोकं मनसा संविभाति विशुद्धसत्त्वः कामयते यांश्च कामान् । तं तं लोकं जायते तांश्च कामांस्तस्मादात्मज्ञं ह्यर्चयेद्भूतिकामः " इति ॥ २८ ॥

क्रिमिकीटपतङ्गेभ्यः श्रेष्ठाः पश्वादयस्तथा ॥
पश्वादिभ्यो नराः श्रेष्ठा नरेभ्यो ब्राह्मणास्तथा ॥ २९ ॥
ब्राह्मणेभ्योऽथ विद्वांसो विद्वत्सु कृतबुद्धयः ।
कृतबुद्धिषु कर्तारस्तेभ्यः संन्यासिनो वराः ॥ ३० ॥
तेषां कुटीचकाः श्रेष्ठा बहूदकसमाश्रिताः ।
बहूदकाद्वरो हंसो हंसात्परमहंसकः ॥ ३१ ॥
परहंसादपि श्रेयानात्मविज्ञास्त्यतोऽधिकः ।
तस्मादात्मविदः पूज्याः सर्वदा सर्वजन्तुभिः ॥ ३२ ॥

तस्मादात्मविदः पूज्या इति यदुक्तं तत्र हेतुत्वेनाऽऽत्मविद्यायाः सर्वतः प्राशस्त्यमाह—क्रिमिकीटेत्यादिना ।

मनुरप्याह—

" भूतानां प्राणिनः श्रेष्ठाः प्राणिनां बुद्धिजीविनः ।
बुद्धिमत्सु नराः श्रेष्ठा नरेषु ब्राह्मणास्तथा ॥
ब्राह्मणेषु च विद्वांसो विद्वत्सु कृतबुद्धयः ।[1]
कृतबुद्धिषु कर्तारः कर्तृषु ब्रह्मवादिनः ॥
ब्रह्मविद्भ्यः परं किंचिन्न भूतं न भविष्यति " ॥

॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥

---

१ ङ. कृतनिश्चयाः । २ क. ख. ग. ङ. तत्र ।

ब्रह्मवर्चसकामस्तु ब्रह्माणं पूजयेन्नरः ।
आरोग्यकाम आदित्यं बलकामः समीरणम् ॥ ३३ ॥
कीर्तिकामोऽनलं तद्वन्मेधाकामः सरस्वतीम् ।
ज्ञानकामो महादेवं सिद्धिकामो विनायकम् ॥ ३४ ॥
भोगकामस्तु शशिनं मोक्षकामस्तु शंकरम् ।
वैराग्यकामो विद्वांसं पुष्टिकामः शचीपतिम् ॥ ३५ ॥

तिथिभेदेन देवताभेदाः प्रागुक्ताः । कामनाभेदेन त्वाह—ब्रह्मवर्चसकाम इत्यादिना ॥ ३३ ॥ ३४ ॥ ३५ ॥

व्रतान्याचरतः श्रद्धाभक्तिभ्यां संयतः शुचिः ।
क्षीयन्ते पापकर्माणि क्षीयन्तेऽस्येति हि श्रुतिः ॥ ३६ ॥
ज्योतिष्टोमादिकं कर्म यः कुर्याद्विधिपूर्वकम् ।
स कैवल्यमवाप्नोति नात्र कार्या विचारणा ॥ ३७ ॥
यः श्रद्धया युतो नित्यं शतरुद्रियमभ्यसेत् ।
अग्निदाहात्सुरापानादकृत्याचरणात्तथा ॥ ३८ ॥

क्षीयन्तेऽस्येति हि श्रुतिरिति । कठवल्लीषु हि श्रूयते—
" भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ।
क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे "
इति ॥ ३६ ॥ ३७ ॥ ३८ ॥

मुच्यते ब्रह्महत्याया इति कैवल्यशाखिनः ।
शतशाखागतं साक्षाच्छतरुद्रियमुत्तमम् ॥ ३९ ॥

कैवल्यशाखिन इति । श्रूयते हि कैवल्योपनिषदि—" यः शतरुद्रियमधीते सोऽग्निपूतो भवति, सुरापानात्पूतो भवति, ब्रह्महत्यायाः पूतो भवति, कृत्याकृत्यात्पूतो भवति "इति । साक्षात्प्रत्यक्षभूता याः शतसंख्याका अध्वर्युशाखास्तासु सर्वासु गतमित्यर्थः । शत रुद्रा देवता अस्येत्यर्थे 'शतरुद्राद्घश्च'

१ क. "न दैवता" । २ घ "वि वे षु" ॰ ॰ ॰ ॰ "दम्भाय । ४ ख. ग. "त्यात्पूतो ।

इति यः । शतं सहस्रमित्यपरिमितपर्यायाः 'सहस्राणि सहस्रशो ये रुद्रा अधिभूम्याम्' इति हि श्रूयते ॥ ३९ ॥

तस्मात्तज्जपमात्रेण सर्वपापात्प्रमुच्यते ।
चमकं च जपेद्विद्वान्सर्वपापप्रशान्तये ॥ ४० ॥

चमकं चेति । वसोर्धारीयम् 'अग्नाविष्णू सजोषसे' इत्यादिकाम् ॥ ४० ॥

सहस्रशीर्षासूक्तं च शिवसंकल्पमेव च ।
जपेत्पञ्चाक्षरं चैव सतारं तारणक्षमम् ॥ ४१ ॥
त्रिःसप्तकुलमुद्धृत्य शिवलोके महीयते ।
तत्र नानाविधान्भोगान्भुक्त्वा कर्मपरिक्षयात् ॥ ४२ ॥

शिवसंकल्पम् । 'येनेदं भूतं भुवनं भविष्यत्' इत्यादिकम् ॥ ४१ ॥ ४२ ॥

भूलोके जायते पुण्यं पापं वा कुरुते पुनः ।
यावज्ज्ञानोदयं तावज्जायते म्रियतेऽपि च ॥ ४३ ॥

यावज्ज्ञानोदयमिति । ज्ञानमुदेति यस्मिन्दिने तज्ज्ञानोदयं तथावदापाति ।तावदित्यर्थः ॥ ४३ ॥

असुखे सुखमारोप्य विषयेऽज्ञानतो नरः ।
करोति सकलं कर्म तत्फलं चावशोऽश्नुते ॥ ४४ ॥
अहो मायावृतो लोकः स्वात्मानन्दमहोदधिम् ।
विहाय विवशः क्षुद्रे रमते किं वदामि तम् ॥ ४५ ॥
तस्मान्मायामयं भोगमसारमखिलं नरः ।
विहाय विमलं नित्यमात्मानन्दं समाश्रयेत ॥ ४६ ॥
सर्वसंग्रहरूपेण सस्नेहं सम्यगीरितम् ।
तस्मात्त्वं सकलं त्यक्त्वा स्वात्मानन्दे कुरु श्रमम्[1] ॥ ४७ ॥

इति श्रीस्कन्दपुराणे सूतसंहितायां ज्ञानयोगखण्डे
दानधर्मफलकथनं नामाष्टमोऽध्यायः ॥ ८ ॥

अज्ञानत इत्यारोपे हेतुः ॥ ४४ ॥ ४५ ॥ ४६ ॥ ४७ ॥

इति श्रीस्कन्दपुराणे सूतसंहितातात्पर्यदीपिकायां ज्ञानयोगखण्डे दानधर्मफलकथनं नामाष्टमोऽध्यायः ॥ ८ ॥

---

१ क. ख. ग. घ. ङ. 'मुद्यमम्' ।

( अथ नवमोऽध्यायः )

ईश्वर उवाच—

अथातः संप्रवक्ष्यामि पापकर्मफलं मुने ।
खरोष्ट्रसूकराजाविगजाश्वमृगपक्षिणाम् ॥ १ ॥
चण्डालपुल्कसत्वं च प्राप्नोति ब्रह्महा क्रमात् ।
दस्यूनां विड्भुजां योनिं पक्षिणां च तथैव च ॥ २ ॥
क्रिमिकीटपतङ्गानां सुरापः प्राप्नुयाद्द्विजः ।
राक्षसानां पिशाचानां चोरो याति सहस्रशः ॥ ३ ॥
क्रव्यादंष्ट्रिणां योनिं तृणादीनां तथैव च ।
क्रूरकर्मरतानां च प्राप्नोति गुरुतल्पगः ॥ ४ ॥
ब्राह्मणस्य धनं क्षेत्रमपहृत्य नराधमः ।
ब्रह्मराक्षसतां याति शतशोऽथ सहस्रशः ॥ ५ ॥

स्वर्गापवर्गसाधने विहिते धर्मज्ञाने उपादानायाभिधाय हानाय निषिद्धं कर्माभिधातुं प्रतिजानीते—अथात इति । यतो हि विहितकारिणामपि निषिद्धापरित्यागे नरकः । अतो विहिताभिधानानन्तरं हानाय निषिद्धमुच्यत इत्यर्थः । बहुतरनरकोपभोगानन्तरं शेषेण खरोष्ट्रादिजन्मप्राप्तिः ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥

धान्यचोरो भवेदाखुर्जलं हृत्वा प्लवो भवेत् ।
कांस्यं हृत्वा भवेद्धंसः श्वा रसं नकुलो घृतम् ॥ ६ ॥
पयः काको भवेन्मांसं हृत्वा गृध्रो भवेत्तथा ।
चक्रवाकस्तु लवणं बकस्तैलापहारतः ॥ ७ ॥

प्लव इति । प्लवो मण्डूकः । पयाम्रच् ॥ ६ ॥ ७ ॥

कौशेयं तित्तिरिः[3] क्षौमं हृत्वा दर्दुरसंज्ञकः ।
पत्रशाकापहारेण बार्हिणः स्युर्नराधमाः ॥ ८ ॥

---

१ °ष्ट्रा° । २ प °भिधाना° । ३ प. तैत्तिरि ।

श्वोऽश्वं हत्वा भवेत्पुष्पं मर्कटः स्यात्तथैव च ।
यानापहरणादुष्ट्रः पशुं हत्वा भवेद्वजः ॥ ९ ॥

दर्दुरो भेकः ॥ ८ ॥ ९ ॥

शवभक्षणतो राजा वैश्यः पूयाशनो भवेत् ।
श्येनाशनो भवेच्छूद्रो जलूको रक्तपो भवेत् ॥ १० ॥

शवभक्षणतो राजेति । योहि राजा न्यायेन प्रजाः परिपालयति स ब्राह्मणादनन्तरं प्रशस्यते । स्मर्यते हि—

' श्रेयान्प्रतिग्रहो राज्ञो माऽन्येषां ब्राह्मणादृते ' इति ।

यस्त्वन्यायकारी क्रूरो राजा स उच्यते शवभक्षणतो राजेति । स हि सूनिचक्रिध्वजिवेश्याभ्योऽपि निकृष्टः स्मर्यते—

" प्रतिग्रहे सूनिचक्रिध्वजिवेश्यानराधिपाः ॥
दुष्टा दशगुणं भोक्ताः पूर्वादेते यथाक्रमम् " इति ।

तथा—

" दशसूनिसमश्चक्री दशचक्रिसमो ध्वजी ॥
दशध्वजिसमा वेश्या दशवेश्यासमो नृपः " इति ।

एवं वैश्यशूद्रयोरपि निकृष्टयोरिहाभिधानम् । न्यायवर्ती तु शूद्रः साधुः द्विपः साधुरित्यादिदर्शने विद्यते । वैश्योऽपि न्यायवर्ती तुलाधारस्तीर्थसेविनो जाजलिब्राह्मणादुत्कृष्टः स्मर्यते । तस्य हि जाजलिं प्रत्येतद्वाक्यम्—

" जाजले तीर्थमात्मैव मा स्म देशातिथिर्भव " इति ॥ १० ॥

नैतावताऽलं विप्रेन्द्र पापकर्मफलोदयम् ।
नरके वर्तनं चास्ति महाघोरेऽतिदारुणे ॥ ११ ॥

हस्तद्वंद्वं दृढं बद्ध्वा ततः शृङ्खलया तथा ।
क्षिप्यते दीप्तवह्नौ च ब्रह्महाऽऽचन्द्रतारकम् ॥ १२ ॥

अतितप्तायसैर्दण्डैः पीड्यते यमकिंकरैः ।
प्राणिहिंसापरो गाढं कल्पकोटिशतं मुने ॥ १३ ॥

तप्ततैलकटाहेषु बद्ध्वा हस्तौ पदद्वयम् ।
क्षिप्यते यमदूतेन तैलचोरो महामुने ॥ १४ ॥

---

१ प. श्वा वे ष्ट° । २ क. °पहार° । ३ क. भवेद्गजः । ४ ग. घ. प. °ष्टचोरो ।

पापकर्मणः फलमुदेति यस्मिन्वर्तने तदित्यर्थः । अधिकरण एरच् । तद्वर्तनमेतावता नालमित्यन्वयः ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥

तप्ततान्रकटाहेषु क्षिप्य मिथ्याभिशंसिनम् ।
जिह्वामुत्पाटयन्त्याशु बहुशो यमकिंकराः ॥ १५ ॥

मिथ्याभिशंसिनमिति । अविद्यमानं दोषमारोपयन्तम् ॥ १५ ॥

तप्तताम्रजलं तीक्ष्णैः पिबेत्युक्त्वाऽयसायुधैः ।
छिद्यते यमदूतैस्तु सुरापानरतो नरः ॥ १६ ॥
छित्त्वा छित्त्वा पुनर्दग्ध्वा पिण्डीकृत्य पुनस्तथा ।
क्षिप्यते पूयपूर्णेऽस्मिन्कटाहे गुरुतल्पगः ॥ १७ ॥
मातरं पितरं ज्येष्ठं गुरुमध्यात्मवेदिनम् ।
महादेवं तथा वेदं विष्णुं ब्राह्मणमेव च ॥ १८ ॥
आदित्यं चन्द्रमग्निं च वायुं निन्दन्ति ये नराः ।
कल्पकोटिशतं दिव्यं पच्यन्ते नरकालये ॥ १९ ॥
यतिहस्ते जलं चान्नं न दत्तं यैर्नराधमैः ।
इक्षुवत्संप्रपीड्यन्ते मुद्गरैर्मुनिसत्तमाः ॥ २० ॥
पादे चाऽऽस्ये तथा पार्श्वे नाभौ शिश्ने गुदेऽक्षिणि ।
निखन्यन्ते महाव्रतैः शङ्कुभिश्चार्थहारिणः ॥ २१ ॥
अयसा निर्मितां कान्तां सुतप्तां झर्झरीकृताम् ।
गाढमालिङ्ग्यते मर्त्यः परदारपरिग्रहात् ॥ २२ ॥
दुश्चारिण्यः स्त्रियश्चापि सुतप्तं पुरुषं तथा ।
श्रौतस्मार्तविहीना ये निषिद्धाचरणे रताः ॥ २३ ॥
पच्यन्ते नरके तीव्रे कल्पकोटिशतं सदा ।
ये शिवायतनारामवापीकूपमठादिकम् ॥ २४ ॥

---

१ ख ग घ. °तैर्त° । २ क. ख. °मैर्वेक° । ३ क. [redacted] ङ. °यम ॥ २० ॥ पा° ।

उपद्रवन्ति पापिष्ठा नृपास्तत्र रमन्ति च ।
व्यायामोद्वर्तनाभ्यङ्गस्नानपानान्नभोजनम् ॥ २५ ॥

॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥

क्रीडनं मैथुनं द्यूतमाचरन्ति मदोद्धताः ।
ते च तद्विविधैर्घोरैरिक्षुयन्त्रादिपीडनैः ॥ २६ ॥

आचरन्ति मक्ते देवालयादौ ॥ २६ ॥

निरयाग्निषु पच्यन्ते यावच्चन्द्रदिवाकरौ ।
वेदमार्गरताचार्यनिन्दां शृण्वन्ति ये नराः ॥ २७ ॥
द्रुतताम्रादिभिस्तेषां कर्ण आपूर्यतेऽनघ ॥ २८ ॥

निरया नरका एतान्नयस्तेषु ॥ २७ ॥ २८ ॥

घोराख्ये नरके केचित्पच्यन्ते पापकर्मतः ।
सुघोराख्ये तथा केचिदतिघोरे च केचन ॥
महाघोराभिधे केचिद्घोररूपे च केचन ॥ २९ ॥
करालाख्ये तथा केचित्तथा केचिद्भयानके ।
कालरात्रौ महापापास्तथा केचिद्भयोत्कटे ॥ ३० ॥
केचिच्चण्डाभिधे केचिन्महाचण्डाभिधे सदा ।
चण्डकोलाहले केचित्प्रचण्डायां चै केचन ॥ ३१ ॥
तथा पद्माभिधायां च पद्मावत्यां च केचन ।
तथा केचन भीमायां केचिद्भीषणसंज्ञिते ॥ ३२ ॥
कराले तु तथा केचिद्विकराले च केचन ।
वज्रे त्रिकोणसंज्ञे च पञ्चकोणे च केचन ॥ ३३ ॥
सुदीर्घे वर्तुलाख्ये च सप्तभौमे च केचन ।
अष्टभौमे च दीप्ते च रौरवे चैव केचन ॥ ३४ ॥

घोरसुघोरादयो नरकविशेषाः ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ ॥ ३४ ॥

केचिदन्येषु पापिष्ठाः पच्यन्ते विवशा भृशम् ।
अहो कष्टं महाप्राज्ञ पापकर्मफलोदयम् ॥ ३५ ॥

पापकर्मणां फलमुदेति यस्मिन्नरकजाते तत्पापकर्मफलोदयम् ॥ ३५ ॥

एवं पापफलं ज्ञात्वा मुने ज्ञानरतो भव ।
ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते मुने ॥ ३६ ॥
अहो ज्ञानं परित्यज्य मायया परिमोहिताः ।
नरकेषु हि पच्यन्ते रवमकल्पेषु दुःखिताः ॥ ३७ ॥

इह जन्मनि जन्मान्तरेषु च कृतस्य पापराशेरुपशमोपायस्य दुर्ज्ञानत्वात्मातिस्विकमयधित्तकरणासंभवात्सफलपापनिर्हरणस्य सुकरमेकमुपायमाह—एवं पापेति ॥

" परोक्षमात्मविज्ञानं शाब्दं देशिकपूर्वकम् ॥
बुद्धिपूर्वकृतं पापं कृत्स्नं दहति वह्निवत् ॥
अपरोक्षात्मविज्ञानं शाब्दं देशिकपूर्वकम् ॥
संसारकारणाज्ञानतमसश्चण्डभास्करः " ॥

इति वक्ष्यति ॥ ३६ ॥ ३७ ॥

एवं पापफलं भुक्त्वा महादेवप्रसादतः ।
पश्चाद्भूमौ विजायन्ते मानुष्ये कर्मसाम्यतः ॥ ३८ ॥
इति श्रीस्कन्दपुराणे सूतसंहितायां ज्ञानयोगखण्डे
पापकर्मफलनिरूपणं नाम नवमोऽध्यायः ॥ ९ ॥

मानुष्ये मनुष्यलोके । कर्मसाम्यतः पुण्यपापकर्मणोरुभयोरपि युगपत्परिपाके ।

' समाभ्यां पुण्यपापाभ्यां मानुष्यं प्राप्नुयान्नरः '

इत्यग्रे वक्ष्यति ॥ ३८ ॥

इति श्रीस्कन्दपुराणे सूतसंहितातात्पर्यदीपिकायां ज्ञानयोगखण्डे पापकर्मफलनिरूपणं नाम नवमोऽध्यायः ॥ ९ ॥

---

१ क. "ष्टा" । २ क. "निर्दग्ध" ।

( अथ दशमोऽध्यायः )

ईश्वर उवाच—

अथातः संप्रवक्ष्यामि देहोत्पत्तिं महामुने ।
शृणु वैराग्यसिद्ध्यर्थमात्मशुद्ध्यर्थमेव च ॥ १ ॥

एवमुत्तमाधिकारिणां वेदान्तवाक्यश्रवणमध्यमाधिकारिणां च कर्माणि ज्ञानसाधनमभिधाय कर्मभिः प्रक्षीणप्रतिबन्धकदुरितानामपि रजसा विक्षिप्तचेतसां सहसा मनस ऐकाग्र्यासंभवात्तदर्थं नाडीशुद्धिपुरःसरमष्टाङ्गयोगं वक्तुं प्रथमं पिण्डोत्पत्तिमाह—अथात इति । यत उक्तपापकर्मफलज्ञानवद्देहोत्पत्तिज्ञानमपि वैराग्योपयोगि, अतस्तदनन्तरमित्यर्थः । देहोत्पत्तिक्रमकथने हि गर्भक्लेशवर्णनाद्वैराग्यं जायते । अत एव योगसाधनप्रवृत्तिद्वारा ब्रह्मज्ञानमपि सिध्यतीत्यर्थः ॥ १ ॥

पुण्यैर्देवत्वमाप्नोति पापैः स्थावरतामियात् ।
समाभ्यां पुण्यपापाभ्यां मानुष्यं प्राप्नुयान्नरः ॥ २ ॥

पुण्यैर्देवत्वमिति । ' पुण्येन पुण्यं लोकं जयति पापेन पापमुभाभ्यामेव मनुष्यलोकम् ' इति श्रुतेः ॥ २ ॥

तत्राऽऽहुत्या रविर्नित्यं वर्धते मुनिसत्तम ।
सूर्याद्वृष्टिर्विजायेत वृष्टेरोषधयः क्रमात् ॥ ३ ॥

तत्राऽऽहुत्येति । यदाहुः—
' अग्नौ प्रास्ताऽऽहुतिः सम्यगादित्यमुपतिष्ठते ।
आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः ' इति ॥ ३ ॥

ओषधीभ्योऽन्नमन्नं च नित्यं भुङ्क्ते च मानवः ।
पञ्चभूतात्मकं भुक्तं किट्टसारात्मना द्विधा ॥ ४ ॥
पुनर्द्विधा भवेत्सारः स्थूलसूक्ष्मविभेदतः ।
किट्टमूत्रपुरीषास्थिमेदस्नाय्वात्मना भवेत् ॥ ५ ॥

पञ्चभूतात्मकं भुक्तमिति । श्रूयते हि— ' अन्नमशितं त्रेधा विधीयते । तस्य

१ ग. 'मनसोऽपि' । २ ङ. मुक्ते कीट्टा' ।

यः स्थविष्ठो धातुस्तत्पुरीषं भवति, यो मध्यमस्तन्मांसं, योऽणिष्ठस्तन्मनः । आपः पीतास्त्रेधा विधीयन्ते । तासां यः स्थविष्ठो धातुस्तन्मूत्रं भवति, यो मध्यमस्तल्लोहितं, योऽणिष्ठः स प्राणः । तेजोऽशितं त्रेधा विधीयते । तस्य यः स्थविष्ठो धातुस्तदस्थि भवति, यो मध्यमः स मज्जा, योऽणिष्ठः स वागिति'। अत्र च भुक्तानां स्थूलादीनामन्नादीनां मनआदिकं प्रत्युपचयमात्रहेतुत्वम् । उपादानत्वं तु सूक्ष्मभूतानामेवेति गतखण्डे एकादशाध्याये 'हिरण्यगर्भं वक्ष्यामि' इत्यत्रोक्तम् ॥ ४ ॥ ५ ॥

पुरीषमूत्रे विसृजेदनिलः क्रमशो मुने ।
सारयोः स्थूलभागस्य पञ्चभूतात्मकैः क्रमात् ॥ ६ ॥

क्रमादिति । समनन्तरवक्ष्यमाणावकाशदानादिप्रभेदेनेत्यर्थः ॥ ६ ॥

वर्धन्ते धातवः सर्वे तेषां मध्ये महामुने ।
आकाशाद्धातवः सर्वे वर्धन्ते वायुना बलम् ॥ ७ ॥
अग्निना वर्धते मज्जा लोहितं वर्धते जलात् ।
भुवा मांसस्य वृद्धिः स्यादित्थं धातुविवर्धनम् ॥ ८ ॥

तदेव क्रममाह—आकाशाद्धातव इति । अवकाशदानद्वाराऽऽकाशस्य वृद्धिहेतुता । व्यूहनद्वारा वायोः । पाकद्वाराऽग्नेः । क्लेदनद्वारा जलस्य । घनीभावद्वारा भुव इति द्रष्टव्यम् ॥ ७ ॥ ८ ॥

अवशिष्टो रसांशश्च द्विधा सत्त्वगुणेन च ।
राजसेन गुणेनापि भवेत्तत्त्वं तपोधन ॥ ९ ॥

अवशिष्टः सारयोः सूक्ष्मः । द्विधेति । सत्त्वरजोभेदेन ॥ ९ ॥

तयोः सत्त्वप्रधानस्य भूमिभागान्महामुने ।
घ्राणेन्द्रियस्यापानस्य वर्धकश्च सदा भवेत् ॥ १० ॥
उपस्थस्यापि विप्रेन्द्र जिह्वायाश्च जलांशकः ।
अग्निर्वाक्चक्षुषोश्चैव हस्तयोरनिलस्तथा ॥ ११ ॥

तत्र सात्त्विकस्य सारस्य पञ्चभूतात्मकस्य यः पृथिव्यंशः स प्राणापानयो-

---

१ ख. यो निकृष्टस्त° । २ ख. °भूत व° । ३ ख °इत्यत्रोक्त° । ४ °कारा° । ५ ख. ग. °त्स्य त° ।

' त्वगसृङ्मांसमेदोऽस्थिमज्जाशुक्राणि धातवः ' ।

इति त्वगादयः शुक्रान्ताः सप्त धातवः कथ्यन्ते । तत्राऽऽद्याः षट्कोशत्वेनोच्यन्ते । मज्जास्थिस्नायवः शुक्राद्रक्तात्त्वङ्मांसशोणितानीति षाट्कौशिकं नाम देहो भवति । इह त्वन्नरसादेव पच्यमानात्किट्टसारात्मना त्वग्रसयोरुत्पत्तिरिति किट्टभूतां त्वचमनादृत्य रस एव रक्तं भवतीति तदारभ्य मेदसश्चैरयावस्था स्नायुपदेन पृथग्धात्वात्मना कोशात्मना च स्वीकृत्य कोशगतषट्संख्या धातुगतसप्तसंख्या चेति द्रष्टव्यम् ॥ १५ ॥

ततो मज्जोद्भवस्तस्माद्बलं पश्चात्समुद्भवम् ।
बलाच्छोणितसंयुक्तात्प्रजा कालविपाकतः ॥ १६ ॥

बलमिति । शुक्रम् । बलाच्छोणितसंयुक्तादिति । मातृबीजसहितात्पितृबीजात् । कालविपाकत इति । स कललादिपरिणामक्रमेण ॥ १६ ॥

ऋतुकाले यदा * शुक्रं निर्दोषं योनिसंगतम् ।
कदाचिन्मारुतेनैव स्त्रीरक्तेनैकतामियात् ॥ १७ ॥
शुक्रशोणितसंयुक्तं कललं बुद्बुदं तथा ।
पिण्डं भवेद्दृढं तद्वच्छिरः पश्चात्पदद्वयम् ॥ १८ ॥
तथाऽङ्गुल्यः कटी कुक्षिस्तद्वत्पृष्ठास्थिसंधयः ।
चक्षुषी नासिका श्रोत्रे पश्चाज्जीवप्रकाशनम् ॥ १९ ॥

तदाह—ऋतुकाल इत्यादिना । निर्दोषमिति । धातुषु नित्यं स्थितानामपि वातपित्तश्लेष्मणां प्रतिकूलत्वे सत्येव दोषत्वम् । अनुकूलत्वे तु गुणत्वमेव । यदुक्तम्—

' कालेन जन्तुर्भवति दोषास्त्वनुगुणा यदि ' इति ।

मारुतेनेति । तदुक्तमागमे—

" स्वस्थानतश्च्युताच्छुक्राद्बिन्दुमादाय मारुतः ।
गर्भाशयं प्रापयति यदा तुल्यं तदा परः ॥

* क. ख. ग. पुस्तकेषु शुक्रशब्दस्थाने सर्वत्र शुक्लमिति वर्तते ।

१ घ. °बलतरैस्°। २ ङ. °तात् । पा°। ३ ग. प. °श्च रसावस्था । ४ क. ख. °पर्ढं रुटं भवेत्तद्° ।

आर्तवात्मसमं बीजयादायास्याश्च मूलता ॥
यद्गा गर्भाशयं नेष्यत्यथ संमिश्रयेन्मरुद्"

इति ॥१७॥१८॥१९॥

अङ्गप्रत्यङ्गसंपूर्णं भवेत्तु क्रमशो मुने ।
एकाहात्सप्तरात्रेण तथा पञ्चदशेन च ॥ २० ॥
एकद्वित्रिक्रमेणैव मासानां तद्विवर्धते ।
इत्थं परिणतो गर्भः पूर्वकर्मवशान्मुने ॥ २१ ॥

उक्तकललादिपरिणामस्य कालपरिमाणमाह—एकाहात्सप्तरात्रेणेत्यादि । तदुक्तं गर्भोपनिषदि—"एकरात्रोषितं कललं भवति, सप्तरात्रोषितं बुद्बुदं भवति, अर्धमासान्तरेण पिण्डो भवति, मासाभ्यन्तरेण कठिनो भवति, मासद्वयेन शिरः कुरुते, मासत्रयेण पादप्रदेशो भवति, अथ चतुर्थे मासेऽङ्गुलिजठरकटिप्रदेशो भवति, पञ्चमे मासे पृष्ठवंशो भवति, षण्मासे नासाक्षिश्रोत्राणि भवन्ति, सप्तमे मासे जीवेन संयुक्तो भवति, अष्टमे मासे सर्वसंपूर्णो भवति" ॥२०॥२१॥

महद्दुःखमवाप्नोति रौरवे नरके यथा ।
तां पीडां च विजानाति तदा जातिस्मरो भवेत् ॥ २२ ॥

जातिस्मर इति । कारणकर्मपरिज्ञानेन दुःखाभिवृद्धये तान्येव कर्माणि पूर्वजन्मान्तराण्यपि स्मारयन्तीत्यर्थः । श्रूयते हि तत्रैव—"नवमे मासि सर्वलक्षणसंपूर्णो भवति, पूर्वजातीः स्मरति, कृताकृतं च कर्म भवति, शुभाशुभं च कर्म विन्दति" इति ॥२२॥

नानायोनिसहस्राणि पुरा प्राप्तानि वै मया ।
आहारा विविधा भुक्ताः पीताश्च विविधाः स्तनाः ॥२३॥
अहो दुःखोदधौ मग्नो न पश्यामि प्रतिक्रियाम् ।
यदि योन्याः प्रमुञ्चामि तं प्रपद्ये महेश्वरम् ॥ २४ ॥
अध्येष्यामि सदा वेदान्साङ्गाञ्शुश्रूषया गुरोः ।
नित्यं नैमित्तिकं कर्म श्रद्धयैव करोम्यहम् ॥ २५ ॥

---

१ क. ख. ग. ङ. "वाश्रम"। २ क. ग. "ङ्गुल्यङ्गठरकटिदेश"। ङ. "ङ्गुल्यङ्गठरकटिद"। ३ क. "क्षिणी श्रो"। ४ ग. ङ. तथा।

कृतदारः पुनर्यज्ञान्करोम्यात्मविशुद्धये ।
यज्ञैर्दग्धमलो भूत्वा ज्ञात्वा संसारहेयताम् ॥ २६ ॥
वैराग्यातिशयेनैव मोक्षकामनया पुनः ।
निरस्य सर्वकर्माणि शान्तो भूत्वा जितेन्द्रियः ॥ २७ ॥
विरजानलजं भस्म गृहीत्वा चाग्निहोत्रजम् ।
अग्निरित्यादिभिर्मन्त्रैः षड्भिराथर्वणैः क्रमात् ॥ २८ ॥
विमृज्याङ्गानि मूर्धादिचरणान्तानि सादरम् ।
समुद्धूल्य सदाऽऽचार्यं प्रणिपत्याऽऽत्मविद्यया ॥ २९ ॥

गर्भोपनिषदर्थं संगृह्णाति—नानायोनीत्यादि । इत्थं हि श्रूयते—
"नानायोनिसहस्राणि दृष्ट्वा चैव ततो मया ।
आहारा विविधा भुक्ताः पीताश्च विविधाः स्तनाः ॥
जातश्चैव मृतश्चैव जन्म चैव पुनः पुनः ।
अहो दुःखोदधौ मग्नो न पश्यामि प्रतिक्रियाम् ।
यदि योन्यां प्रमुञ्चामि सांख्यं योगं समाश्रये ।
अशुभक्षयकर्तारं फलमुक्तिप्रदायिनम् ।
यदि योन्यां प्रमुञ्चामि तं प्रपद्ये महेश्वरम्"
इत्यादि ॥२३॥२४॥२५॥२६॥२७॥२८॥२९॥

संसारागारं घोरं लङ्घयामीहमात्मनः ।
इत्थं गर्भगतः स्मृत्वा योनियन्त्रप्रपीडनात् ॥ ३० ॥
जायते वायुना याति विस्मृतिं वैष्णवेन च ।
अज्ञाने सति रागाद्या धर्माधर्मौ च तद्वशात् ॥ ३१ ॥
धर्माधर्मवशात्पुंसां शरीरमुपजायते ।
ज्ञानेनैव निवृत्तिः स्यादज्ञानस्य न कर्मणा ॥ ३२ ॥

इत्थं गर्भगत इति । तदाह सैवोपनिषत्—'योनिद्वारेण संप्राप्ते यन्त्रेणाऽऽपीड्यमानो महता दुःखेन जातमात्रस्तु वैष्णवेन वायुना संस्पृश्यते तदा न स्मरति' इति ॥३०॥३१॥३२॥

---

१ ग कृत्वा चैव । २ ग. °तस्त ।

यद्यात्मा मलिनः कर्ता भोक्ता च स्यात्स्वभावतः ।
नास्ति तस्य विनिर्मोक्षः संसाराज्जन्मकोटिभिः ॥ ३३ ॥

यद्यात्मा मलिन इति । मलिनत्वमज्ञानादावौपाधिकत्वमात्मनो मालिन्यं तन्निबन्धनश्च भोग इति प्रागुक्तं यदि स्वाभाविकं स्यात्तदा न मुक्तिरित्यर्थः ॥ ३३ ॥

आत्माऽयं केवलः स्वच्छः शान्तः सूक्ष्मः सनातनः ।
अस्ति सर्वान्तरः साक्षी चिन्मात्रसुखविग्रहः ॥ ३४ ॥

कथं तर्हि विनिर्मोक्षस्तत्राऽऽह—आत्माऽयं केवल इति । अनेन शोधितत्त्वंपदार्थो दर्शितः ॥ ३४ ॥

अयं स भगवानीशः स्वयंज्योतिः सनातनः ।
अस्माद्धि जायते विश्वमत्रैव प्रविलीयते ॥ ३५ ॥

तस्य तत्पदार्थतादात्म्यरूपं महावाक्यार्थमाह—अयं स भगवानिति॥३५॥

अयं ब्रह्मा शिवो विष्णुरयमिन्द्रः प्रजापतिः ।
अयं वायुरयं चाग्निरयं सर्वाश्च देवताः ॥ ३६ ॥
य एवंभूतमात्मानमन्यथा प्रतिपद्यते ।
किं तेन न कृतं पापं चोरेणाऽऽत्मापहारिणा ॥ ३७ ॥

अयं ब्रह्मेति । श्रूयते हि 'स ब्रह्म(ह्मा) स शिवः स हरिः स इन्द्रः सोऽक्षरः परमः स्वराट्' इति ॥ ३६ ॥ ३७ ॥

ब्राह्मण्यं प्राप्य लोकेऽस्मिन्नमूकोऽबधिरो भवेत् ।
नापक्रामति संसारात्स खलु ब्रह्महा भवेत् ॥ ३८ ॥

ब्राह्मण्यं प्राप्येति । अमूकः शास्त्राण्यध्येतुं शक्तः । अबधिरः श्रोतुं क्षमः । इत्थं ज्ञानसामग्रीसद्भावेऽपि, आलस्यादिना सच्चिदानन्दैकरसमात्मानमजानानः पुनः पुनः संसारे पातयति यः स ब्रह्मघातक इत्यर्थः ॥ ३८ ॥

आत्मानं चेद्विजानीयादयमस्मीति पूरुषः ।
किमिच्छन्कस्य कामाय शरीरमनु संज्वरेत् ॥ ३९ ॥

---

१ घ. मलय- । २ घ. ट. "ग्नीशा" । ३ ग. ङ. "बतस्य" । ४ ग. "न निर्गुण ।

अविदुषः संसारप्राप्त्याऽऽत्मघातकतामुक्त्वा विदुषस्तद्विरहंतामाह—आत्मानं चेदिति ॥ ३९ ॥

भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ।
क्षीयन्ते चास्य कर्माणि दृष्टे ह्यात्मनि सुव्रत ॥ ४० ॥

ज्ञानिनस्तापहेतुशरीरेन्द्रियादिसंबन्धविरहे कारणमाह—भिद्यत इति ॥४०॥

यतो वाचो निवर्तन्ते अप्राप्य मनसा सह ।
ज्ञात्वाऽऽत्मानं परानन्दं न बिभेति कुतश्चन ॥ ४१ ॥
तस्मात्सर्वप्रयत्नेन श्रद्धया गुरुभक्तितः ।
उत्सृज्य प्राकृतं भावं शिवोऽहमिति भावयेत् ॥ ४२ ॥
एतद्धि जन्मसाफल्यं ब्राह्मणानां विशेषतः ।
प्राप्यैतत्कृतकृत्यो हि द्विजो भवति नान्यथा ॥ ४३ ॥

कुतश्चनेति । विहिताकरणाद्विहितकरणाद्वेत्यर्थः । श्रूयते हि— "एवं ह वाव न तपति किमहं साधु नाकरवं किमहं पापमकरवम्' इति॥४१॥४२॥४३॥

सर्ववेदान्तसर्वस्वं मया प्रोक्तं बृहस्पते ।
श्रद्धयैव विजानीहि श्रद्धा सर्वत्र कारणम् ॥ ४४ ॥

श्रद्धयैवेति । श्रद्धा हि समाधिलाभद्वारा पुरुषार्थसाधनमुक्ता पातञ्जले 'श्रद्धावीर्यस्मृतिसमाधिप्रज्ञापूर्वक इतरेषाम्' इति ॥ ४४ ॥

सूत उवाच—

इति श्रुत्वा मुनिश्रेष्ठो गिरां नाथः समाहितः ।
स्तोतुमारभते भक्त्या देवदेवं त्रियम्बकम् ॥ ४५ ॥

बृहस्पतिरुवाच—

नमः शिवाय सोमाय सपुत्राय त्रिशूलिने ।
प्रधानपुरुषेशाय सृष्टिस्थित्यन्तहेतवे ॥ ४६ ॥
सर्वज्ञाय वरेण्याय शंकरायाऽऽर्तिहारिणे ।
नमो वेदांतवेद्याय चिन्मात्राय महात्मने ॥ ४७ ॥

---

१ ङ. 'इतस्म'। २ घ. 'मुत्त' पा'।

देवदेवाय देवाय नमो विश्वेश्वराय च ॥
ऋतं सत्यं परं ब्रह्म पुरुषं कृष्णपिङ्गलम् ॥ ४८ ॥
ऊर्ध्वरेतं विरूपाक्षं विश्वरूपं नमाम्यहम् ॥
विश्वं विश्वाधिकं रुद्रं विश्वमूर्तिं वृषध्वजम् ॥ ४९ ॥
नमामि सत्यविज्ञानं हृदयाकाशमध्यगम् ॥
चन्द्रः सूर्यस्तथेन्द्रश्च वह्निश्च यमसंज्ञितः ॥ ५० ॥
निर्ऋतिर्वरुणो वायुर्धनदो रुद्रसंज्ञितः ॥
स्थूला मूर्तिर्महेशस्य तया व्याप्तमिदं जगत् ॥ ५१ ॥
यस्य प्रसादलेशेन देवा देवत्वमागताः ।
तं नमामि महात्मानं सर्वज्ञमपराजितम् ॥ ५२ ॥
नमो दिग्वाससे तुभ्यमम्बिकापतये नमः ।
उमायाः पतये तुभ्यमीशानाय नमो नमः ॥ ५३ ॥

॥ ४५ ॥ ४६ ॥ ४७ ॥ ४८ ॥ ४९ ॥ ५० ॥ ५१ ॥ ५२ ॥ ५३ ॥

नमो नमो नमस्तुभ्यं पुनर्भूयो नमो नमः ।
ॐकारान्ताय सूक्ष्माय मायातीताय ते नमः ॥ ५४ ॥
नमो नमः कारणकारणाय ते
नमो नमो मङ्गलमङ्गलात्मने ।
नमो नमो वेदविदां मनीषिणा-
मुपासनीयाय नमो नमो नमः ॥ ५५ ॥

इति श्रीस्कन्दपुराणे सूतसंहितायां ज्ञानयोगखण्डे
पिण्डोत्पत्तिकथनं नाम दशमोऽध्यायः ॥ १० ॥

ॐकारान्तायेति । ॐकारस्य प्रान्ते नादस्तदन्ततिपातनया निष्कलः शिवोऽपि तथोच्यते ॥ ५४ ॥ ५५ ॥

इति श्रीसूतसंहितातात्पर्यदीपिकायां ज्ञानयोगखण्डे पिण्डोत्पत्ति-
कथनं नाम दशमोऽध्यायः ॥ १० ॥

---

१ ग. घ. ङ. [illegible] । २ ङ. [illegible] ।

( अथैकादशोऽध्यायः )

ईश्वर उवाच—

अथातः संप्रवक्ष्यामि नाडीचक्रमनुत्तमम् ।
श्रद्धया गुरुभक्त्या च विद्धि वाचस्पतेऽधुना ॥ १ ॥

यतः शरीरसंस्थानज्ञानाधीनं नाडीज्ञानं तदधीनं च तच्छोधनविज्ञानमतः शरीरोत्पत्तिकथनानन्तरं नाडीचक्राभिधानं प्रतिजानीते—अथात इति ॥ १ ॥

शरीरं तावदेव स्यात्षण्णवत्यङ्गुलात्मकम् ।
मनुष्याणां मुनिश्रेष्ठ स्वाङ्गुलीभिरिति श्रुतिः ॥ २ ॥

षण्णवत्यङ्गुलेति । अत्राङ्गुलीशब्देन शरीरायामस्य षण्णवतितमांशोऽभिधीयते ॥ २ ॥

देहमध्ये शिखिस्थानं तप्तजाम्बूनदप्रभम् ।
त्रिकोणं मनुजानां तु सत्यमुक्तं बृहस्पते ॥ ३ ॥
गुदात्तु द्व्यङ्गुलादूर्ध्वं मेढ्रात्तु द्व्यङ्गुलादधः ।
देहमध्यं विजानीहि मनुष्याणां बृहस्पते ॥ ४ ॥

तादृशानामंशानामष्टचत्वारिंशत्तममधस्तादुपरिष्टाच्च परित्यज्य मध्ये मूलाधारस्तमाह—देहमध्य इति । शिखिस्थानमग्निस्थानम् । तदाहुरागमिकाः—

"षण्णवत्यङ्गुलोत्सेधो देहः स्वाङ्गुलिमानतः ।
पायोस्तु द्व्यङ्गुलादूर्ध्वं लिङ्गाच्च द्व्यङ्गुलादधः ।
मध्यमेकाङ्गुलं यत्र देहमध्यं प्रचक्षते " इति ॥ ३ ॥ ४ ॥

कन्दस्थानं मुनिश्रेष्ठ मूलाधारान्नवाङ्गुलम् ।
चतुरङ्गुलमायामविस्तारं मुनिसत्तम ॥ ५ ॥
कुक्कुटाण्डसमाकारं भूषितं च त्वगादिभिः ।
तन्मध्यं नाभिरित्युक्तं मुने वेदान्तवेदिभिः ॥ ६ ॥

---

१ ङ. 'नानन्दीना' । २ घ. 'ज्य मू' । ३ घ. पायु तद्य ।

कन्दस्थानमित्यादि । तदुक्तमन्यत्र—

"नवाङ्गुलोर्ध्वतस्तस्मादस्ति कन्दोऽण्डसंनिभः ।
चतुरङ्गुलविस्तार उत्सेधेनापि तत्समः ।
त्वगास्थिभूषितः कन्दस्तन्मध्यं नाभिरुच्यते" इति ॥ ५ ॥ ६ ॥

कन्दमध्ये स्थिता नाडी सुषुम्नेति प्रकीर्तिता ।
तिष्ठन्ति परितस्तस्या नाड्यो मुनिसत्तम ॥ ७ ॥
द्विसप्ततिसहस्राणि तासां मुख्याश्चतुर्दश ।
सुषुम्ना पिङ्गला तद्वदिडा चैव सरस्वती ॥ ८ ॥
पूषा च वारुणी चैव हस्तिजिह्वा यशस्विनी ।
अलम्बुषा कुहूश्चैव विश्वोदरा पयस्विनी ॥ ९ ॥
शङ्खिनी चैव गान्धारी इति मुख्याश्चतुर्दश ।
तासां मुख्यतमास्तिस्रस्तिसृष्वेका वरा मुने ॥ १० ॥

पवनस्य सुषुम्नाप्रवेशलक्षणं योगमग्रे विवक्षुः सुषुम्नाया नाड्यन्तरेभ्यः प्राधान्यमाह—कन्दमध्य इति ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥

ब्रह्मनाडीति सा प्रोक्ता मुने वेदान्तवेदिभिः ।
पृष्ठमध्ये स्थितेनास्थ्ना वीणादण्डेन सुव्रत ॥ ११ ॥

ब्रह्मनाडीति । ब्रह्मलोकप्राप्तिद्वारत्वात् । तथा चाऽऽथर्वणोपनिषदि—"शतं चैका च हृदयस्य नाड्यस्तासां मूर्धानमभिनिःसृतैका । तयोर्ध्वमायन्नमृतत्वमेति विष्वङ्ङन्या उत्क्रमणे भवन्ति" इति । अमृतत्वं चात्र ब्रह्मलोकप्राप्तिरेव ।

"आभूतसंप्लवं स्थानममृतत्वं हि भाष्यते"

इत्याहुः । उक्तानां नाडीनां संस्थानमभिदि(धि)त्सुः प्रथमं सुषुम्नामाह—पृष्ठमध्य इति ॥ ११ ॥

सह मस्तकपर्यन्तं सुषुम्ना सुप्रतिष्ठिता ।
नाभिकन्दादधःस्थानं कुण्डल्या द्व्यङ्गुलं मुने ॥ १२ ॥

पवनो हि मूलाधारादुत्थित इडापिङ्गलाभ्यां संचरत्येव । तदुक्तम्—

---

१ घ. °श्वोदरा । २ ङ. °गान्धारी । ३ घ. °धनान्द्रेरोत्' । ४ घ. °न्दा ।

"देहेऽपि मूलाधारेऽस्मिन्समुद्याति समीरणः।
नाडीभ्यामस्तमभ्येति प्राणतो द्विषडङ्गुले" इति ।

तत्र मूलाधारादुत्थितस्य वायोः स्वसंमुखावस्थितमध्यवर्तिसुषुम्नाद्वारपरित्यागेन पार्श्वस्थितयोरिडापिङ्गलयोः संचारे कारणं सुषुम्नाद्वारस्य कुण्डल्या स्वफणाग्रेणापिधानमभिधातुं कुण्डल्याः स्थानं स्वरूपं व्यापारं च क्रमेणाऽऽह—नाभिकन्दादिति ॥ १२ ॥

अष्टप्रकृतिरूपा सा कुण्डली मुनिसत्तम ।
यथ वद्वायुचेष्टां च जलान्नादीनि नित्यशः ॥ १३ ॥

अष्टप्रकृतीति ।

"मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त"

इत्युक्ता अष्टौ प्रकृतयः। तत्र मूलप्रकृत्यात्मिका कुण्डली तस्याः सुषुम्नावेष्टनानि महदादिसप्तप्रकृतिविकृत्यात्मकानीत्यष्टप्रकृतिरूपता । सा ह्यष्टधा कुण्डलीकृता तिष्ठति । यदाहुः—

"कुण्डली परितस्तस्मादष्टधा कुण्डलीकृता ।
अष्टप्रकृतिरूपा सा सुप्तसर्पसमाकृतिः" इति ।

एवं स्वरूपमुक्त्वा व्यापारमाह—यथावदिति ॥ १३ ॥

परितः कन्दपार्श्वेषु निरुध्यैव सदा स्थिता ।
स्वमुखेन सदाऽऽवेष्ट्य ब्रह्मरन्ध्रमुखं मुने ॥ १४ ॥

मूलाधारादुत्थितस्य पवनस्य साक्षात्स्वसंमुखसुषुम्नाद्वारसंचारादिपथाववायुचेष्टामियं निरुणद्धि । कोष्ठगतस्य भक्षितपीतादेर्मूलाधारस्थज्वलज्ज्वयपायकत्वेन त्वरया पाकप्रतिबन्धो जलान्नादीनां निरोधः । स्वमुखेनेति । मुखेन सुषुम्नामूलरन्ध्रं पिधायाष्टधाकुण्डलीभावेन स्वग्रीवां परिवेष्ट्य शेषकायं पृष्ठास्थिसंबन्धमुपरि नीत्वा पुच्छेन ब्रह्मरन्ध्रं पिदधातीत्यर्थः । तदुक्तम्—

"कन्दनाभेरधोरन्ध्रे निधाय स्वफणा दृढम् ।
संनिरुध्य मरन्मार्गं पुच्छेन स्वमुखं तथा ॥
ब्रह्मरन्ध्रं च संवेष्ट्य पृष्ठास्थ्ना सह सुस्थिता" इति ॥ १४ ॥

सुषुम्नाया इडा सव्ये दक्षिणे पिङ्गला स्मृता[1]।
सरस्वती कुहूश्चैव सुषुम्नापार्श्वयोः स्थिते ॥ १५ ॥

---

१ क 'धीराया प' ।

गान्धारी हस्तिजिह्वा च इडायाः पूर्वपार्श्वयोः ।
पूषा यशस्विनी चैव पिङ्गलापृष्ठपूर्वयोः ॥ १६ ॥
कुहूश्च हस्तिजिह्वाया मध्ये विश्वोदरी स्थिता ।
यशस्विन्याः कुह्वोर्मध्ये वारुणी सुप्रतिष्ठिता ॥ १७ ॥
पूषायाश्च सरस्वत्या मध्ये प्रोक्ता पयस्विनी ।
गान्धारायाः सरस्वत्या मध्ये प्रोक्ता च शङ्खिनी ॥ १८ ॥

उद्घाटनीयद्वारायाः सुषुम्नायाः संस्थानमभिधाय निरोद्धव्ययोरिडापिङ्गलयोराह—सुषुम्नाया इति । सरस्वतीत्यादिनाडीस्थानसंनिवेशाभिधानस्य प्रयोजनं प्रमादात्तत्र प्रविष्टस्य पवनस्य प्रयत्नमार्गेणेनापकृष्य सुषुम्नायोजनमिति । सरस्वतीति । सुषुम्नायाः पुरतः सरस्वती । तदुक्तम्—

"सुषुम्नापूर्वभागस्था जिह्वान्तस्था सरस्वती ।
पृष्ठतश्च कुहूः" इति ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥

अलम्बुषा स्थिता पायुपर्यन्तं कन्दमध्यतः ।
पूर्वभागे सुषुम्नाया मेढ्रान्तं संस्थिता कुहूः ॥ १९ ॥
अधश्चोर्ध्वं स्थिता नाडी वारुणी सर्वगामिनी ।
पिङ्गलासंज्ञिता नाडी याम्यनासान्तमिष्यते ॥ २० ॥

पूर्वभागे सुषुम्नाया इति । पृष्ठत उत्पन्नाऽपि सुषुम्नायाः पूर्वभागं समागत्य मेढ्रान्तं गतेत्यर्थः ॥ १९ ॥ २० ॥

इडा चोत्तरनासान्तं स्थिता वाचस्पते तथा ।
यशस्विनी च याम्यस्य पादाङ्गुष्ठान्तमिष्यते ॥ २१ ॥
पूषा याम्याक्षिपर्यन्तं पिङ्गलायास्तु पृष्ठतः ।
पयस्विनी तथा याम्यकर्णान्तं प्रोच्यते बुधैः ॥ २२ ॥
सरस्वती तथा चोर्ध्वमा जिह्वायाः स्थिता मुने[१] ।
हस्तिजिह्वा तथा सव्यपादाङ्गुष्ठान्तमिष्यते ॥ २३ ॥

१ ग. ङ. यशस्विनी ।

शङ्खिनी नाम या नाडी सव्यकर्णान्तमुच्यते ।
गान्धारी सव्यनेत्रान्ता प्रोक्ता वेदान्तवेदिभिः ॥ २४ ॥
विश्वोदराभिधा नाडी तुण्डमध्ये व्यवस्थिता ।
प्राणोऽपानस्तथा व्यानः समानोदान एव च ॥ २५ ॥

याम्यस्य पादेति । याम्यस्य पादस्य योऽङ्गुष्ठस्तत्पर्यन्तमित्यर्थः ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥

नागः कूर्मश्च कृकरो देवदत्तो धनंजयः ।
एते नाडीषु सर्वासु चरन्ति दश वायवः ॥ २६ ॥
तेषु प्राणादयः पञ्च मुख्याः पञ्च च सुव्रत ।
प्राणसंज्ञस्तथाऽपानः पूज्यः प्राणस्तयोर्मुने ॥ २७ ॥

दश वायव इति । तत्राऽऽद्या नव देहस्थितिहेतवः । दशमो धनंजयस्तु लौकिकः । यदाहुः—

" धनंजयाख्यो देहेऽस्मिन्कुर्याद्बहुविधान्स्वान् ।
स तु लौकिकवायुत्वान्मृतं च न विमुञ्चति " इति ॥ २६ ॥ २७ ॥

आस्यनासिकयोर्मध्ये नाभिमध्ये तथा हृदि ।
प्राणसंज्ञोऽनिलो नित्यं वर्तते मुनिसत्तम ॥ २८ ॥

व्यापिनामपि प्राणानां स्थानविशेषेषु कार्यभेदकरतामभिप्रेत्याऽऽह—आस्यनासिकयोरिति ॥ २८ ॥

अपानो वर्तते नित्यं गुदमेढ्रोरुसंधिषु ।
उदरे वृषणे कट्यां नाभौ जङ्घे च सुव्रत ॥ २९ ॥
व्यानः श्रोत्राक्षिमध्ये च कुकट्याङ्गुष्ठयोरपि ।
घ्राणस्थाने गले चैव वर्तते मुनिपुंगव ॥ ३० ॥
उदानः सर्वसंधिस्थो विज्ञेयः पादहस्तयोः ।
समानः सर्वदेहेषु व्याप्य तिष्ठत्यसंशयः ॥ ३१ ॥

ऊरुसंधिर्वङ्क्षणः ॥ २९ ॥ ३० ॥ ३१ ॥

---

१ ग. कृकरो ।

नागादिवायवः पञ्च त्वगस्थ्यादिषु संस्थिताः ।
उद्गारादिगुणः प्रोक्तो नागाख्यस्य बृहस्पते ॥ ३२ ॥
निमीलनादि कूर्मस्य क्षुतं तु कृकरस्य च ।
देवदत्तस्य कर्म स्यात्तन्द्रीकर्म महामुने ॥ ३३ ॥
धनंजयस्य शोफादि कर्म प्रोक्तं बृहस्पते ।
निःश्वासोच्छ्वासकासादि प्राणकर्म बृहस्पते ॥ ३४ ॥
अपानाख्यस्य वायोस्तु विण्मूत्रादिविसर्जनम् ।
समानः सर्वसामीप्यं करोति मुनिसत्तम ॥ ३५ ॥

नागादिवायव इति । नागादीनां बाह्यकोशवर्तित्वं प्राणादीनामन्तःकोशवर्तित्वं चोक्तमन्यत्र—

" एते प्राणादयः पञ्च मध्यकोशेषु संस्थिताः ।
त्वगादिपञ्चकोशस्था नागाद्या बाह्यवायवः " इति ॥ ३२ ॥

॥ ३३ ॥ ३४ ॥ ३५ ॥

उदान ऊर्ध्वगमनं करोत्येव न संशयः ॥
व्यानो विवादकृत्प्रोक्तो मुने वेदान्तवेदिभिः ॥ ३६ ॥

विवादकृदिति । विवादः प्राणापानयोः परस्परमतिबन्धाद्भेदाभावः । तदुक्तं छान्दोग्ये—" यद्वै प्राणिति स प्राणो यदपानिति सोऽपानोऽथ यः प्राणापानयोः संधिः स व्यानः, यो व्यानः सा वाक्तस्मादप्राणन्ननपानन्वाचमभिव्याहरति " इत्यादि ॥ ३६ ॥

सुषुम्नायाः शिवो देव इडाया देवता हरिः ।
पिङ्गलाया विरिञ्चिः स्यात्सरस्वत्या विराण्मुने ॥ ३७ ॥
पूषा दिग्देवता प्रोक्ता वारुणी वायुदेवता ।
हस्तिजिह्वाभिधायास्तु वरुणो देवता भवेत् ॥ ३८ ॥
यशस्विन्या मुनिश्रेष्ठ भगवान्भास्करो मुने ।
अलम्बुषाभिमान्यात्मा वरुणः परिकीर्तितः ॥ ३९ ॥

---

१ ग. ख. ग. स। २ घ. मुने।

कुहोः क्षुद्देवता प्रोक्ता गान्धारी चन्द्रदेवता ।
शङ्खिन्याश्चन्द्रमास्तद्वत्पयस्विन्याः प्रजापतिः ॥ ४० ॥

उक्तनाडीनामधिष्ठातृदेवता आह—सुषुम्नायाः शिव इत्यादि ॥ ३७ ॥ ॥ ३८ ॥ ३९ ॥ ४० ॥

विश्वोदराभिधायास्तु भगवान्पावकः पतिः ।
इडायां चन्द्रमा नित्यं चरत्येव महामुने ॥ ४१ ॥

दिनरात्रिषु विषुवायनग्रहणानि देहे दर्शयितुं तेषां चन्द्रसूर्यायत्तत्वात्तयोरेव तावद्देहेऽवस्थानमाह—इडायां चन्द्रमा इति । अत एवेडायां पवनस्योद्गमकालो रात्रिः । प्रवेशकालस्त्वहः । रात्रावहनि च परिदृश्यस्य चन्द्रस्योदयास्तमयानियमात् । पिङ्गलायां तु पवनस्योद्गमो दिनं प्रवेशो रात्रिः । तदुक्तं प्रपञ्चसारे—

" देहेऽपि मूलाधारेऽस्मिन्समुद्याति समीरणः ।
नाडीभ्यामस्तमभ्येति प्राणतो द्विपदङ्गुले ॥
अहोरात्रमिनेन्दुभ्यामूर्ध्वाधोवृत्तिरिष्यते " इति ॥ ४१ ॥

पिङ्गलायां रविस्तद्वन्मुने वेदविदांवर ।
पिङ्गलाया इडायां तु वायोः संक्रमणं तु यत् ॥ ४२ ॥
तदुत्तरायणं प्रोक्तं मुने वेदार्थवेदिभिः ।
इडायाः पिङ्गलायां तु प्राणसंक्रमणं मुने ॥ ४३ ॥

पिङ्गलाया इति । प्राङ्मुखस्थितस्य हि पुरुषस्य पिङ्गला दक्षिणदिशि भवति । इडा तूत्तरदिशि । मकरायनसमये च दक्षिणदिगवस्थितः सूर्यः कर्कटायनपर्यन्तं नित्यमुत्तरो गच्छतीति तदुत्तरायणं यथा । एवं पिङ्गलायां स्थितः पवनः सूर्यात्मा यावत्साकल्येनेडां संक्रामति तावदुत्तरायणमित्यर्थः । इत्थं दक्षिणायनमपि द्रष्टव्यम् । तदुक्तं प्रपञ्चसारे—

"वामदक्षिणनाडीभ्यां स्यादुदग्दक्षिणायनम्" इति ।

कालोत्तरे च—

'उत्तरं दक्षिणं प्रोक्तं वामदक्षिणसंज्ञितम्' इति ॥ ४२ ॥ ४३ ॥

दक्षिणायनमित्युक्तं पिङ्गलायामिति श्रुतिः ।
इडापिङ्गलयोः संधिं यदा प्राणः समागतः ॥ ४४ ॥

---

१ घ. °स्त ग° । ङ. °रेम° ।

इडापिङ्गलयोरिति । अमावास्यायां हि चन्द्रार्कौ सहैवोदयं सहैवास्तं च प्रतिपद्येते । इडावर्ती च प्राणश्चन्द्रः पिङ्गलावर्ती सूर्यः संधिसमये चोभयत्र प्राणः सम एव वर्तमानः सहैवोदेति सहैव चास्तमेतीति साऽमावास्या ॥४४॥

अमावास्या तदा प्रोक्ता देहे देहभृतां वर ।
मूलाधारं यदा प्राणः प्रविष्टः पण्डितोत्तम ॥ ४५ ॥

मूलाधारमिति । सूर्यो हि प्राणः । तथा च प्रश्नोपनिषदि—" आदित्यो ह वै प्राणो रयिरेव चन्द्रमाः " इति । स च प्राणो मूलाधारप्रवेशानन्तरमुदेति । मूर्धप्रवेशानन्तरं घ्राणतो द्विषडङ्गुले चास्तमेति । देवानां चाऽऽद्यविषुवे मेषायने सूर्योदयः । विषुवान्तरे तुलायने चास्तमय इति ॥ ४५ ॥

तदाऽऽद्यं विषुवं प्रोक्तं तापसैस्तापसोत्तम ।
प्राणसंज्ञो मुनिश्रेष्ठ मूर्धानं प्रविशेद्यदा ॥ ४६ ॥

प्राणोदयास्तमयसमयौ विषुवद्वयत्वेनोक्तौ । अथामावास्यात्वेनोक्तो यः संधिसमयः स एव विषुवद्वयत्वेनोक्तः । द्विशतिकालोत्तरे—

" मध्ये तु विषुवं प्रोक्तं पुटद्वयविनिःसृतम् " इति ।

तत्र दक्षिणाद्वामगमनसमये यः संधिः स उत्तरायणमध्यवर्तित्वादाद्यविषुवकालः । इतरस्तु दक्षिणायनमध्यवर्तित्वाद्द्वितीयविषुवकाल इति ॥ ४६ ॥

तथाऽन्त्यं विषुवं प्रोक्तं धार्मिकैस्तत्त्वचिन्तकैः ।
निःश्वासोच्छ्वासनं सर्वं मासानां संक्रमो भवेत् ॥ ४७ ॥

संक्रमकालमाह—निःश्वासेति । इडाचारिणां निःश्वासोच्छ्वासानां ततः सकाशाद्यः सुषुम्नाप्रवेशकालस्ततश्च पुनः पिङ्गलाप्रवेशकालस्ततः पुनः सुषुम्नाप्रवेशकालः पुनरिडाप्रवेशकाल इति । तेऽप्येतेऽपि संक्रमकाला इत्यर्थः । तदुक्तं कालोत्तरे—

' संक्रान्तिः पुनरस्यैव स्वस्थानानिलयोगतः ' इति ।

स्वस्थानिलस्य यानीडापिङ्गलासुषुम्नास्थानानि तेषां तद्योगत इत्यर्थः । तथा च स्पष्टीकृतं तत्रैव—

"इडा च पिङ्गला चैव अमा चैव तृतीयका ।
सुषुम्ना मध्यमे ह्यङ्ग इडा वामे प्रकीर्तिता ।
पिङ्गला दक्षिणे ह्यङ्ग एषु संक्रान्तिरिष्यते" इति ।

अमा सुषुम्ना । तत्र हि सूर्याचन्द्रमसोः सहैवोदयास्तमयौ भवत इति ॥४७॥

इडायाः कुण्डलीस्थानं यदा प्राणः समागतः ।
सोमग्रहणमित्युक्तं तदा तत्त्वविदां वर ॥ ४८ ॥

इडाया इति । इडासंचारिणः प्राणस्य चन्द्रात्मकत्वात्तस्य सुप्तसर्पाकारकुण्डलीस्थानेऽन्तर्हितत्वात्स सोमग्रहणकाल इत्यर्थः ॥ ४८ ॥

तथा पिङ्गलया प्राणः कुण्डलीस्थानमागतः ।
यदा तदा भवेत्सूर्यग्रहणं मुनिसत्तम ॥ ४९ ॥

तथा पिङ्गलयेति । पिङ्गलचारिणः प्राणस्य सूर्यात्मकत्वात्पूर्ववदेव तस्यापि ग्रहणम् ॥ ४९ ॥

श्रीपर्वतः शिरस्थाने केदारं तु ललाटके ।
वाराणसी महाप्राज्ञ भ्रुवोर्घ्राणस्य मध्यमे ॥ ५० ॥

योगिनः शरीरस्थानभेदानामेव तत्तत्तीर्थविशेषतामाह—श्रीपर्वत इति ॥ ५० ॥

भ्रुवोर्घ्राणस्य यः संधिरिति जाबालकी श्रुतिः ।
कुरुक्षेत्रं कुचस्थाने प्रयागो हृत्सरोरुहे ।
चिदम्बरं च हृन्मध्य आधारः कमलालयः ॥ ५१ ॥

जाबालकी श्रुतिरिति । "अथ हैनमत्रिः पप्रच्छ याज्ञवल्क्यं य एषोऽनन्तोऽव्यक्त आत्मा तं कथमहं विजानीयामिति । स होवाच याज्ञवल्क्यः सोऽविमुक्त उपास्यो य एषोऽनन्तोऽव्यक्त आत्मा सोऽविमुक्ते प्रतिष्ठित इति । सोऽविमुक्तः कस्मिन्प्रतिष्ठित इति वरणायां नास्यां च मध्ये प्रतिष्ठित इति । का वै वरणा का च नासीति सर्वानिन्द्रियकृतान्दोषान्वारयति तेन वरणा भवति सर्वानिन्द्रियकृतान्पापान्नाशयति तेन नासी भवतीति कतमं चास्य स्थानं भवतीति भ्रुवोर्घ्राणस्य च यः संधिः स एष द्यौर्लोकस्य परस्य च संधिर्भवति " इति हि तत्र श्रूयते ॥ ५१ ॥

आत्मस्थं तीर्थमुत्सृज्य बहिस्तीर्थानि यो व्रजेत् ।
करस्थं स महारत्नं त्यक्त्वा काचं विमार्गति ॥ ५२ ॥

उक्ततीर्थानां बाह्यतीर्थेभ्यो विशेषमाह—आत्मस्थमिति । विमार्गति गवेषते ॥ ५२ ॥

---

१ ग. °त्मता° । २ ङ. °तमचास्य ।

भावतीर्थं परं तीर्थं प्रमाणं सर्वकर्मसु ।
अन्यथाऽऽलिङ्ग्यते कान्ता भावेन दुहिताऽन्यथा ॥ ५३ ॥

ननु बाह्यानि तीर्थानि प्रत्यक्षतो निरीक्ष्यन्त आन्तराणि तु भावनामात्रसिद्धानीति कथं ततस्तेषामुत्कर्ष इत्यत आह—भावतीर्थमिति । भावः शास्त्रप्रतिपादितेषु प्राकृततीर्थेष्वास्तिक्यबुद्धिः । सा च संसारोत्तरणकारणतया तरन्त्यनेनेति तीर्थं तद्विषयीकृतस्यार्थस्य परमार्थत्वात्प्रमाणं च । बाह्यतीर्थस्नानदानादिषु सर्वेष्वपि कर्मसु सत्येव भावे फलसाधनता नान्यथेति तस्य सर्वत्र प्रमाणतेत्यर्थः । कर्मण एकरूपत्वेऽपि भावभेदस्यैव निषेधानिषेधवैषम्यहेतुत्वमुदाहरति—अन्यथाऽऽलिङ्ग्यत इति ॥ ५३ ॥

तीर्थानि तोयपूर्णानि देवान्काष्ठादिनिर्मितान् ।
योगिनो न प्रपद्यन्ते स्वात्मप्रत्ययकारिणः ॥ ५४ ॥
बहिस्तीर्थात्परं तीर्थमन्तस्तीर्थं महामुने ।
आत्मतीर्थं परं तीर्थमन्यतीर्थं निरर्थकम् ॥ ५५ ॥
चित्तमन्तर्गतं दुष्टं तीर्थस्नानैर्न शुध्यति ।
शतशोऽपि जलैर्धौतं सुराभाण्डमिवाशुचि ॥ ५६ ॥

स्वात्मप्रत्ययेति । स्वात्मन्येव प्राप्तौढीरिततीर्थादिविश्वासवन्त इत्यर्थः । ॥ ५४ ॥ ५५ ॥ ५६ ॥

विषुवायनकालेषु ग्रहणे चान्तरे सदा ।
वाराणस्यादिके स्थाने स्नात्वा शुद्धो भवेन्नरः ॥ ५७ ॥

अतः प्रागुक्तपुण्यकालेषु प्रागुक्ततीर्थस्थानेषु चित्तस्यापनलक्षणमेव स्नानं कार्यमित्याह—विषुवेति ॥ ५७ ॥

ज्ञानयोगपराणां तु पादप्रक्षालितं जलम् ।
पापशुद्ध्यर्थमज्ञानां तत्तीर्थं मुनिसत्तम ॥ ५८ ॥
तीर्थे दाने तपोयज्ञे काष्ठे पाषाणके सदा ।
शिवं पश्यति मूढात्मा शिवो देहे प्रतिष्ठितः ॥ ५९ ॥

---

१ क. ख. ग. °दुष्टं° । २ ख. °षेध° । ३ ग. °स्रोन्त्रि° । ४ ग. °प्रस्तादिषु ।

सर्वत्रावस्थितं शान्तं न प्रपश्यन्ति शंकरम् ।
ज्ञानचक्षुर्विहीनत्वादहो मायाबलं मुने ॥ ६० ॥
आत्मस्थं यः शिवं त्यक्त्वा बहिःस्थं यजते शिवम् ।
हस्तस्थं पिण्डमुत्सृज्य लिहेत्कूर्परमात्मनः ॥ ६१ ॥

उक्तयोगासमर्थानामपि लघुमक्षरतं चोपायमाह—ज्ञानयोगेति ॥ ५८ ॥ ॥ ५९ ॥ ६० ॥ ६१ ॥

शिवमात्मनि पश्यन्ति प्रतिमासु न योगिनः ।
अज्ञानां भावनार्थाय प्रतिमाः परिकल्पिताः ॥ ६२ ॥

प्रतिमानामुपयोगमाह—अज्ञानामिति ॥ ६२ ॥

अपूर्वानपरं ब्रह्म स्वात्मानं सत्यमद्वयम् ।
प्रज्ञानघनमानन्दं यः पश्यति स पश्यति ॥ ६३ ॥

अपूर्वं कारणरहितमनपरं कार्यरहितं निष्कलमखण्डमद्वयं सच्चिदानन्दैकरसमित्यर्थः । स पश्यतीति । तदीयमेव दर्शनं फलवदित्यर्थः ॥ ६३ ॥

सर्वभूतस्थमात्मानं विशुद्धज्ञानदेहिनम् ।
स्वात्मन्यपश्यन्बाह्येषु पश्यन्नपि न पश्यति ॥ ६४ ॥

अन्तर्योगाभावे केवलबहिर्योगस्य वैफल्यमाह—सर्वभूतेति ॥ ६४ ॥

देवतां महतीमन्यामुपास्ते स्वात्मनो नरः ।
न स वेद परं तत्त्वमथ योऽन्यामिति श्रुतिः ॥ ६५ ॥

महतीं देवतां परशिवात्मिकां स्वात्मनः सकाशादन्यां य उपास्ते भेदेन स मूढः पशुरित्यर्थः । अथ योऽन्यामिति श्रुतिरिति । वाजसनेयके हि श्रूयते—"अथ योऽन्यां देवतामुपास्ते, अन्योऽसावन्योऽहमस्मीति न स वेद यथा पशुरेवं स देवानां यथा ह वै बहवः पशवो मनुष्यं भुञ्ज्युरेवमेकैकः पुरुषो देवान्भुनक्त्येकस्मिन्नेव पशावादीयमानेऽप्रियं भवति किमु बहुषु । तस्मादेषां तन्न प्रियं यदेतन्मनुष्या विद्युः" इति ॥ ६५ ॥

नाडीपुञ्जं सदासारं नरभावं महामुने ।
समुत्सृज्यात्मनाऽऽत्मानमहमित्यवधारय ॥ ६६ ॥

---

१ घ. °वो मानुष्य भेजिरे° ।

भेदेन चेन्नोपासनीयं तर्हि कथमित्यत आह—नाडीपुञ्जमिति । नर इति भावोऽहमभिमानो यस्मिंस्तं नाडीपुञ्जं तदुपलक्षितं शरीरत्रयमुपाधिभूतमात्मना समुत्सृज्य बुद्ध्या विविच्याऽऽत्मानमहमित्यवधार्य परमात्मानं प्रत्यक्तादात्म्येनानुसंधेहीत्यर्थः ॥ ६६ ॥

अशरीरं शरीरेषु महान्तं विभुमीश्वरम् ।
आनन्दमक्षरं साक्षान्मत्वा धीरो न शोचति ॥ ६७ ॥

उक्तेऽर्थे काठकश्रुतिमर्थत उदाहरति—अशरीरमिति । श्रुतिपाठस्त्वेवम्—
"अशरीरं शरीरेष्वनवस्थेष्ववस्थितम् ।
महान्तं विभुमात्मानं मत्वा धीरो न शोचति" इति ।
मत्वा ज्ञात्वा ॥ ६७ ॥

विभेदजनकेऽज्ञाने नष्टे ज्ञानबलान्मुने ।
आत्मनो ब्रह्मणो भेदमसन्तं कः करिष्यति ॥ ६८ ॥

तावतैव शोकाभावे कारणमाह—विभेदेति । निरतिशयानन्दपरशिवस्वरूपस्य हि जीवस्य तथात्वापरिज्ञाननिबन्धनो यो भेदः स एव सांसारिकसकलक्लेशहेतुरैकात्म्यज्ञानेन तादृगज्ञाननिवृत्तौ ब्रह्मणः सकाशादात्मनो जीवस्य तन्निबन्धनभेदाभावान्निर्हेतुकः संसारशोक इत्यर्थः ॥ ६८ ॥

सर्वं समासतः प्रोक्तं सादरं मुनिसत्तम ।
तस्मान्मायामयं देहं मुक्त्वा पश्य स्वमात्मकम् ॥ ६९ ॥

सूत उवाच—
इति श्रुत्वा गिरां नाथो भक्त्या परवशः पुनः ।
स्तोतुमारभते देवमम्बिकापतिमद्भुतम् ॥ ७० ॥

बृहस्पतिरुवाच—
जय देव परानन्द जय चित्सत्यविग्रह ।
जय संसाररोगघ्न जय पापहर प्रभो ॥ ७१ ॥
जय पूर्ण महादेव जय देवारिमर्दन ।
जय कल्याण देवेश जय त्रिपुरमर्दन ॥ ७२ ॥

१ ग. °धिपरम्° । २ ग. °न्दमीश्वर । ३ ब. °मवता मुने ।

जयाहंकारशत्रुघ्न जय मायाविषापह ।
जय वेदान्तसंवेद्य जय वाचामगोचर ॥ ७३ ॥
जय रागहरश्रेष्ठ जय द्वेषहराग्रज ।
जय साम्ब सदाचार जय सर्वसमाद्भुत ॥ ७४ ॥
जय ब्रह्मादिभिः पूज्य जय विष्णो परामृत ।
जय विद्यामहेशान जय विद्याप्रदानिशम् ॥ ७५ ॥
जय सर्वाङ्गसंपूर्ण नागाभरणभूषित ।
जय ब्रह्मविदां प्राप्य जय भोगापवर्गद ॥ ७६ ॥
जय कामहर प्राज्ञ जय कारुण्यविग्रह ।
जय भस्म महादेव जय भस्मावगुण्ठित ॥ ७७ ॥
जय भस्मरतानां तु पाशभङ्गपरायण ।
जय हृत्पङ्कजे नित्यं यतिभिः पूज्यविग्रह ॥ ७८ ॥

सूत उवाच—

इति स्तुत्वा महादेवं प्रणिपत्य बृहस्पतिः ।
कृतार्थः क्लेशनिर्मुक्तो भक्त्या परवशोऽभवत् ॥ ७९ ॥
य इदं पठते नित्यं संध्ययोरुभयोरपि ।
भक्तिपारं गतो भूत्वा परं ब्रह्माधिगच्छति ॥ ८० ॥
गङ्गाप्रवाहवत्तस्य वाग्विभूतिर्विजृम्भते ।
बृहस्पतिसमो बुद्ध्या गुरुभक्त्या मया समः ॥ ८१ ॥
पुत्रार्थी लभते पुत्रं कन्यार्थी कन्यकामियात् ।
ब्रह्मवर्चसकामस्तु तदाप्नोति न संशयः ॥ ८२ ॥
तस्माद्भवद्भिर्मुनयः संध्ययोरुभयोरपि ।
जप्यं स्तोत्रमिदं पुण्यं देवदेवस्य भक्तितः ॥ ८३ ॥

---

१ ङ. °य विज्ञानद° । २ प्रकाशनम । ३ ङ. भक्तिमम् ।

इति श्रीस्कन्दपुराणे सूतसंहितायां ज्ञानयोगखण्डे
नाडीचक्रनिरूपणं नामैकादशोऽध्यायः ॥ ११ ॥

॥ ६९ ॥ ७० ॥ ७१ ॥ ७२ ॥ ७३ ॥ ७४ ॥ ७५ ॥ ७६ ॥ ७७ ॥ ७८ ॥
॥ ७९ ॥ ८० ॥ ८१ ॥ ८२ ॥ ८३ ॥

इति श्रीसूतसंहितातात्पर्यदीपिकायां ज्ञानयोगखण्डे नाडीचक्रनिरूपणं नामैकादशोऽध्यायः ॥ ११ ॥

---

( अथ द्वादशोऽध्यायः )

---

ईश्वर उवाच—

अथातः संप्रवक्ष्यामि नाडीशुद्धिं समासतः ।
विध्युक्तकर्मसंयुक्तः कामसंकल्पवर्जितः ॥ १ ॥
यमाद्यष्टाङ्गसंयुक्तः शान्तः सत्यपरायणः ।
गुरुशुश्रूषणरतः पितृमातृपरायणः ॥ २ ॥

यतो नाडीचक्रज्ञानाधीनं तत्र चित्तप्रणिधानपूर्वकं नाडीशोधनमतस्तदनन्तरं तत्कथनमिति प्रतिजानीते—अथात इति । पापनिबन्धनस्य शोधनसमये नाडीस्खलनस्य परिहारायाऽऽह—विध्युक्तेति । चित्तविक्षेपनिबन्धनस्य परिहारायाऽऽह—कामेति ॥ १ ॥ २ ॥

स्वाश्रमे संस्थितः सम्यग्ज्ञानिभिश्च सुशिक्षितः ।
पर्वताग्रे नदीतीरे बिल्वमूले वनेऽथवा ॥ ३ ॥

ज्ञानिभिरिति । शोधनेऽनुभवपर्यन्तं ज्ञानवद्भिः । ऐकाग्र्यानुकूलं देशमाह—पर्वताग्र इत्यादि ॥ ३ ॥

मनोरमे शुचौ देशे वेदघोषसमन्विते ।
फलमूलैः सुसंपूर्णैर्वारिभिश्च सुसंयुते ॥ ४ ॥
सुशोभनं मठं कृत्वा सर्वरक्षासमन्वितम् ।
त्रिकालस्नानसंयुक्तः श्रद्दधानः समाहितः ॥ ५ ॥

---

१ ग. "डीस्तवन" । क. "डीसरम्न" । २ ग. "नै तथा ।

विरजानलजं भस्म गृहीत्वा चाग्निहोत्रजम् ।
अग्निरित्यादिभिर्मन्त्रैर्जाबालैः सप्तभिर्मुने ॥ ६ ॥
षड्भिर्वाऽऽथर्वणैर्मन्त्रैः समुद्धूल्य ततः परम् ।
तिर्यक्त्रिपुण्ड्रमुरसा शिरसा बाहुमूलतः ॥ ७ ॥
धारयेत्परया भक्त्या देवदेवं प्रणम्य च ।
सरस्वतीं सुसंपूज्य स्कन्दं विघ्नेश्वरं गुरुम् ॥ ८ ॥
चन्द्रमादित्यमनिलं तथैवाग्निं महामुने ।
आरुह्य चाऽऽसनं पश्चात्प्राङ्मुखोदङ्मुखोऽपि वा ॥ ९ ॥

पावनत्वाय वैदिकाधिष्ठितं देशमाह—वेद्योपेति । ननु योगाभ्यासमये वेदघोषापेक्षा ।

"समे शुचौ शर्करावह्निवालुकाविवर्जिते शब्दजलाश्रयादिभिः ।
मनोऽनुकूले न तु चक्षुपीडने गुहानिवाताश्रयणे प्रयोजयेत्" इति

श्वेताश्वतरश्रुतेः ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥

समग्रीवशिरःकायः संवृतास्यः सुनिश्चलः ।
नासाग्रे शशभृद्बिम्बं बिन्दुमध्ये तुरीयकम् ॥ १० ॥
स्रवन्तममृतं पश्येन्नेत्राभ्यां सुसमाहितः ।
इडया प्राणमाकृष्य पूरयित्वोदरस्थितम् ॥ ११ ॥

समग्रीवेति । तथाच गीतासु—

"समं कायशिरोग्रीवं धारयन्नचलं स्थिरः ।
संप्रेक्ष्य नासिकाग्रं स्वं दिशश्चानवलोकयन् ॥
प्रशान्तात्मा विगतभीर्ब्रह्मचारिव्रते स्थितः ।
मनः संयम्य मच्चित्तो युक्त आसीत मत्परः" इति ।

नासाग्र इति । नासाग्रे चन्द्रबिम्बं तत्र यत्तुरीयकं यकाराच्चतुर्थं वकारं सबिन्दुकममृतस्राविणं स्वनेत्राभ्यामपि तमेव देवं पश्यन्नित्यर्थः । तदुक्तमागमे—

१ ब. 'ध्ये' म' । १ ट. बिम्बक ।

"नासाग्रे मण्डलं चान्द्रं ज्योत्स्नाजालसमन्वितम् ।
नादबिन्दुयुजा मध्ये वकारेण विराजितम् ॥
ध्यायन्नपूरयेद्वायुम्" इति ॥ १० ॥ ११ ॥

ततोऽग्निं देहमध्यस्थं ध्यायञ्ज्वालावलीमयम् ।
बिन्दुनादसमायुक्तमग्निबीजं विचिन्तयेत् ॥ १२ ॥
पश्चाद्विरेचयेत्सम्यक् मन्दं पिङ्गलया बुधः ।
पुनः पिङ्गलयाऽऽपूर्य वह्निबीजमनुस्मरन् ॥ १३ ॥
पुनर्विरेचयेद्धीमानिडयैव शनैः शनैः ।
त्रिचतुर्वत्सरं वाऽथ त्रिचतुर्मासमेव वा ॥ १४ ॥
षट्कृत्व आचरेन्नित्यं रहस्येवं त्रिसंधिषु ।
नाडीशुद्धिमवाप्नोति पृथक्चिह्नोपलक्षिताम् ॥ १५ ॥

बिन्दुनादसमायुक्तमिति। बिन्दुरनुस्वारः। नादस्तदनुगतो ध्वनिः ॥ १२ ॥ ॥ १३ ॥ १४ ॥ १५ ॥

शरीरलघुता दीप्तिर्वह्नेर्जठरवर्तिनः ।
नादाभिव्यक्तिरित्येतच्चिह्नं तत्सिद्धिसूचकम् ॥ १६ ॥

नादाभिव्यक्तिरिति। अनाहतनादः स्फुरतीत्यर्थः ॥ १६ ॥

यावदेतानि संपश्येत्तावदेवं समाचरेत् ।
अथवैतत्परित्यज्य स्वात्मशुद्धिं समाचरेत् ॥ १७ ॥

विवेकज्ञानाधिकारवतस्तु तदेव पर्याप्तं नाडीशुद्ध्यादिभिर्न प्रयोजनमित्याह—अथवैतदिति। पूर्वोक्ता विशुद्धिर्नाडीगतपित्तश्लेष्मादिशोषणेन देहशुद्धिमात्रे हेतुः। विवेकज्ञानं तु नाडीपरिवृतं स्थूलं देहं तत्र व्याप्तं लिङ्गशरीरं तदुभयोपादानं चाविद्यामात्मनः सकाशात्परिशोध्य विविक्तं सच्चिदानन्दैकरसमात्मतत्त्वं व्यवस्थापयतीति पूर्वस्मादिदं प्रशस्ततरमित्यर्थः ॥ १७ ॥

आत्मा शुद्धः सदा नित्यः सुखरूपः स्वयंप्रभः ।
अज्ञानान्मलिनो भाति ज्ञानाच्छुद्धो विभात्ययम् ॥ १८ ॥

१ ङ. °बीजं मुनीश्वर। २ क. घ. ङ. °क्षितम्। ३ घ. स्फुरती°। ४ ध. °वृते स्थू°। ५ ग. °नन्दरसात्मत°।

अज्ञानमलपङ्कं यः क्षालयेज्ज्ञानतोयतः ।
स एव सर्वदा शुद्धो नाज्ञः कर्मरतो हि सः ॥ १९ ॥

वस्तुभूतश्लेष्मादिमलनिरसनं हि वस्तुभूतेनैव पवनेन भवति । नित्यशुद्धस्वप्रकाशचिदानन्दैकरस आत्मा त्वविद्यामलेनैव मलिन इति विद्यया तन्निरासे स्वाभाविकी तस्य शुद्धिर्व्यवतिष्ठत इत्याह—आत्मा शुद्ध इति ॥ १८॥१९॥

न बुद्धिभेदं जनयेदज्ञानां कर्मसङ्गिनाम् ।
कर्म कर्तव्यमित्येवं बोधयेत्तान्समाहितः ॥ २० ॥

इति श्रीस्कन्दपुराणे सूतसंहितायां ज्ञान-
योगखण्डे नाडीशुद्धिनिरूपणं नाम
द्वादशोऽध्यायः ॥ १२ ॥

इयमेव यदि मन्नरता किमिति तर्हि भूतपूर्वा शुद्धिः शास्त्रैरुपदिश्यत इत्यत आह—न बुद्धिभेदमिति । अज्ञो हि कर्मणि सक्तो ज्ञानानधिकृत इति तस्य कृते साऽपि शुद्धिर्वक्तव्येत्यर्थः ॥ २० ॥

इति श्रीसूतसंहितातात्पर्यदीपिकायां ज्ञानयोगखण्डे नाडीशुद्धि-
निरूपणं नाम द्वादशोऽध्यायः ॥ १२ ॥

---

( अथ त्रयोदशोऽध्यायः )

---

ईश्वर उवाच—

*अथातः संप्रवक्ष्यामि तथाऽष्टाङ्गानि सुव्रत ।*
यमश्च नियमश्चैव तथैवाऽऽसनमेव च ॥ १ ॥
प्राणायामस्तथा विप्र प्रत्याहारस्तथा परः ।
धारणा च तथा ध्यानं समाधिश्चाष्टमो मुने ॥ २ ॥

यत उक्तनाडीशोधनसापेक्षाणि यमादीन्यष्टौ योगाङ्गान्यतस्तदनन्तरं तदभिधानमिति प्रतिजानीते—अथात इति ॥ १ ॥ २ ॥

---

१ ग. 'तथाऽष्टाङ्गा'।

अहिंसा सत्यमस्तेयं ब्रह्मचर्यं दयाऽऽर्जवम् ।
क्षमा धृतिर्मिताहारः शौचं चेति यमा दश ॥ ३ ॥

उद्देशक्रमेण यमस्य लक्षणमाह—अहिंसेत्यादि ॥ ३ ॥

वेदोक्तेन प्रकारेण विना सत्यं तपोधन ।
कायेन मनसा वाचा हिंसा हिंसा न चान्यथा ॥ ४ ॥

"न हिंस्यात्सर्वा भूतानि" इति निषेधः स रागनिबन्धनाया एव हिंसायाः। अतः "अग्नीषोमीयं पशुमालभेत" इति विधिनिबन्धना हिंसा न निषिध्यत इत्याह—वेदोक्तेनेति । अग्नीषोमीयस्य हि सोमयागाङ्गत्वात्तद्धिंसा विधिनिबन्धना । "श्येनेनाभिचरन्यजेत" इत्यत्रापि श्येनयागाङ्गभूतपशुहिंसा विधिनिबन्धनेव न निषिध्यते । या तु तेनाभिचारयोगेण शत्रुवधात्मिका हिंसा सा द्वेषनिबन्धनैवेति विध्यसंस्पर्शान्निषिध्यते[1] । शारीरहिंसाया एव हिंसात्वं न पुनर्वाचिकमानसयोरिति[2] भ्रमनिरासाय तद्भेदानाह—कायेनेति । साऽप्येकैका त्रिविधा । स्वयं कृताऽन्येन कारिता क्रियमाणा केवलमनुमोदिता चेति नवधा। तत्राप्येकैका त्रिविधा । लोभमूला क्रोधमूलाऽज्ञानमूला चेति सप्तविंशतिधा । साऽप्येकैका त्रिविधा । मृदुमात्रा मध्यमात्राऽधिकमात्रा चेत्येकाशीतिर्हि हिंसाभेदा वितर्कनामानस्त्यक्तव्याः । तत्त्यागोपायश्च तेषां निरतिशयदुःखहेतवस्तत्त्वज्ञानप्रतिबन्धकाश्चेति प्रणिधानम् । एतच्च सत्यवचनादिवितर्कान्तरेष्वपि द्रष्टव्यम् । तदुक्तं योगशास्त्रे—

"वितर्कबाधने प्रतिपक्षभावनम्" 'वितर्का हिंसादयः कृतकारितानुमोदिता लोभक्रोधमोहपूर्वका मृदुमध्याधिमात्रा[3] दुःखाज्ञानानन्तफला इति प्रतिपक्षभावनम्' इति ॥ ४ ॥

आत्मा सर्वगतोऽच्छेद्य अग्राह्य इति या मतिः ।
सा चाहिंसा परा प्रोक्ता मुने वेदान्तवेदिभिः ॥ ५ ॥

कायिकादिहिंसाया वर्जनमुक्त्वाऽऽत्महिंसाया वर्जनमाह—आत्मा सर्वगत इति ।

"अच्छेद्योऽयमदाह्योऽयमक्लेद्योऽशोष्य एव च ।
नित्यः सर्वगतः स्थाणुरचलोऽयं सनातनः." इति ।

उक्तस्याऽऽत्मस्वरूपस्याज्ञानमात्महिंसा । यदाहुः—

---

१ क. °ते । ग्री° । २ ख °नमिरयो° । ३ क. ख ग. °धिक्मा° ।

अज्ञानमलपङ्कं यः क्षालयेज्ज्ञानतोयतः ।
स एव सर्वदा शुद्धो नाज्ञः कर्मरतो हि सः ॥ १९ ॥

वस्तुभूतश्लेष्मादिमलनिरसनं हि वस्तुभूतेनैव पवनेन भवति । नित्यशुद्धस्वप्रकाशचिदानन्दैकरस आत्मा स्वविद्यामलेनैव मलिन इति विद्यया तन्निरासे स्वाभाविकी तस्य शुद्धिर्व्यवतिष्ठत इत्याह—आत्मा शुद्ध इति ॥ १८॥१९॥

न बुद्धिभेदं जनयेदज्ञानां कर्मसङ्गिनाम् ।
कर्म कर्तव्यमित्येवं बोधयेत्तान्समाहितः ॥ २० ॥

इति श्रीस्कन्दपुराणे सूतसंहितायां ज्ञान-
योगखण्डे नाडीशुद्धिनिरूपणं नाम
द्वादशोऽध्यायः ॥ १२ ॥

इयमेव यदि प्रशस्ता किमिति तर्हि भूतपूर्वा शुद्धिः शास्त्रैरुपदिश्यत इत्यत आह—न बुद्धिभेदमिति । अज्ञो हि कर्मणि सक्तो ज्ञानानधिकृत इति तस्य कृते साऽपि शुद्धिर्वक्तव्येत्यर्थः ॥ २० ॥

इति श्रीसूतसंहितातात्पर्यदीपिकायां ज्ञानयोगखण्डे नाडीशुद्धि-
निरूपणं नाम द्वादशोऽध्यायः ॥ १२ ॥

---

( अथ त्रयोदशोऽध्यायः )

---

ईश्वर उवाच—

अथातः संप्रवक्ष्यामि तवाष्टाङ्गानि सुव्रत ।
यमश्च नियमश्चैव तथैवाऽऽसनमेव च ॥ १ ॥
प्राणायामस्तथा विप्र प्रत्याहारस्तथा परः ।
धारणा च तथा ध्यानं समाधिश्चाष्टमो मुने ॥ २ ॥

यत उक्तनाडीशोधनसापेक्षाणि यमादीन्यष्टौ योगाङ्गान्यतस्तदनन्तरं तदभिधानमिति प्रतिजानीते—अथात इति ॥ १ ॥ २ ॥

---

१ म. 'ज्ञानपिण्ड' ।

आहिंसा सत्यमस्तेयं ब्रह्मचर्यं दयाऽऽर्जवम् ।
क्षमा धृतिर्मिताहारः शौचं चेति यमा दश ॥ ३ ॥

उद्देशक्रमेण यमस्य लक्षणमाह—अहिंसेत्यादि ॥ ३ ॥

वेदोक्तेन प्रकारेण विना सत्यं तपोधन ।
कायेन मनसा वाचा हिंसा हिंसा न चान्यथा ॥ ४ ॥

"न हिंस्यात्सर्वा भूतानि" इति निषेधः स रागनिबन्धनाया एव हिंसायाः। अतः "अग्नीषोमीयं पशुमालभेत" इति विधिनिबन्धना हिंसा न निषिध्यत इत्याह—वेदोक्तेनेति । अग्नीषोमीयस्य हि सोमयागाङ्गत्वात्तद्धिंसा विधिनिबन्धना । "श्येनेनाभिचरन्यजेत" इत्यत्रापि श्येनयागाङ्गभूतपशुहिंसा विधिनिबन्धनैव न निषिध्यते । या तु तेनाभिचारयोगेण शत्रुवधात्मिका हिंसा सा द्वेषनिबन्धनैवेति विध्यसंस्पर्शान्निषिध्यते[1] । शारीरहिंसाया एव हिंसात्वं न पुनर्वाचिकमानसयोरिति भ्रमनिरासाय तद्भेदानाह—कायेनेति । साऽप्येकैका त्रिविधा । स्वयं कृताऽन्येन कारिता क्रियमाणा केवलमनुमोदिता चेति नवधा। तत्राप्येकैका त्रिविधा । लोभमूला क्रोधमूलाऽज्ञानमूला चेति सप्तविंशतिधा । साऽप्येकैका त्रिविधा । मृदुमात्रा मध्यमात्राऽधिकमात्रा चेत्येकाशीतिर्हि हिंसाभेदा वितर्कनामानस्त्यक्तव्याः । तत्त्यागोपायश्च तेषां निरतिशयदुःखहेतवस्तत्त्वज्ञानप्रतिबन्धकाश्चेति प्रणिधानम् । एतच्च सत्यवचनादिवितर्कान्तरेष्वपि द्रष्टव्यम् । तदुक्तं योगशास्त्रे—

"वितर्कबाधने प्रतिपक्षभावनम्" 'वितर्का हिंसादयः कृतकारितानुमोदिता लोभक्रोधमोहपूर्वका मृदुमध्याधिमात्रा[3] दुःखाज्ञानानन्तफला इति प्रतिपक्षभावनम्' इति ॥ ४ ॥

आत्मा सर्वगतोऽच्छेद्य अग्राह्य इति या मतिः ।
सा चाहिंसा परा प्रोक्ता मुने वेदान्तवेदिभिः ॥ ५ ॥

कायिकादिहिंसाया वर्जनमुक्त्वाऽऽत्महिंसाया वर्जनमाह—आत्मा सर्वगत इति ।

"अच्छेद्योऽयमदाह्योऽयमक्लेद्योऽशोष्य एव च ।
नित्यः सर्वगतः स्थाणुरचलोऽयं सनातनः" इति ।

उक्तस्याऽऽत्मस्वरूपस्याज्ञानमात्महिंसा । यदाहुः—

---

१ क. °ते । शरी° । २ ख. °नमित्यो° । ३ क. ख. घ. °भिन्न° ।

" योऽन्यथा सन्तमात्मानमन्यथा प्रतिपद्यते ।
प्रायश्चित्तं न पश्यामि येन शुध्येत्स आत्महा " इति ।

अतो ज्ञानेन तन्निरासः परमाऽहिंसेत्यर्थः ॥ ५ ॥

यत्त्वदुष्टेन्द्रियैर्दृष्टं श्रुतं वेदविदां वर ।
तस्यैवोक्तिर्भवेद्विप्र सत्यता नान्यथा भवेत् ॥ ६ ॥

अहिंसावत्सत्यमपि परमपरं चेति द्विविधम् । तत्रापरमाह—यत्त्वदुष्टेति । भ्रमदृष्टाभिधानं प्रमाणदृष्टस्यापि रागादिभिरन्यथाभिधानं चासत्यमित्यर्थः॥६॥

सर्वं सत्यं परं ब्रह्म न चान्यदिति या मतिः ।
तत्सत्यं परमं प्रोक्तं वेदान्तज्ञानपारगैः ॥ ७ ॥

परमं सत्यमाह—सर्वं सत्यमिति । सर्वं वस्तु ब्रह्मस्वरूपेणैव सत्यं पृथक्त्वेनासत्यमिति यज्ज्ञात्वाऽभिधानं तत्सत्यमित्यर्थः ॥ ७ ॥

अन्यदीये तृणे रत्ने काञ्चने मौक्तिकेऽपि वा ।
मनसाऽपि निवृत्तिर्या तदस्तेयं विदुर्बुधाः ॥ ८ ॥

अस्तेयमपि द्विविधम् । तत्राऽऽद्यमाह—अन्यदीय इति । मृदुमध्याधिकमात्रा इत्युक्तभेदोपलक्षणत्वेन तृणादिविभागकथनम् ॥ ८ ॥

आत्मनोऽनात्मभावेन ह्यपहारविवर्जनम् ।
यत्तदस्तेयमित्युक्तमात्मविद्भिर्महात्मभिः ॥ ९ ॥

द्वितीयमस्तेयमाह—आत्मन इति । अनात्मा देहेन्द्रियादिस्तद्रूपतयैवाऽऽत्मनो यत्परिज्ञानं स आत्मापहारः ।

" योऽन्यथा सन्तमात्मानमन्यथा प्रतिपद्यते ।
किं तेन न कृतं पापं चोरेणाऽऽत्मापहारिणा " इत्युक्तम् ।

तद्विवर्जनं देहेन्द्रियादिव्यतिरिक्तात्मानुसंधानं परममस्तेयमित्यर्थः ॥ ९ ॥

कायेन मनसा वाचा नारीणां परिवर्जनम् ।
ऋतुसेवां विना स्वस्यां ब्रह्मचर्यं तदुच्यते ॥ १० ॥

अपरं ब्रह्मचर्यमाह—कायेनेति । अनुरागपुरःसराणि नारीणां स्पर्शभाषणचिन्तनान्यब्रह्मचर्यम् । उक्तं हि—

---

१ प. °दुष्टस्या° । २ प. °व रूपत्वं° ।

" स्मरणं कीर्तनं केलिः प्रेक्षणं गुह्यभाषणम् ॥
संकल्पोऽध्यवसायश्च क्रियानिर्वृत्तिरेव च ॥
एतन्मैथुनमष्टाङ्गं प्रवदन्ति मनीषिणः ।
विपरीतं ब्रह्मचर्यम् " इति ।

ऋतौ स्वभार्यासेवा तु ब्रह्मचर्यमेव । ऋतावितिे विहितकालोपलक्षणम् । श्रूयते हि—" प्राणं वा एते प्रस्कन्दन्ति ये दिवा रत्या संयुज्यन्ते । ब्रह्मचर्यमेव तद्यद्रात्रौ रत्या संयुज्यते " इति ॥ १० ॥

ब्रह्मभावे मनश्चारं ब्रह्मचर्यं परं तथा ।
आत्मवत्सर्वभूतेषु कायेन मनसा गिरा ॥ ११ ॥
अनुकम्पा दया सैव प्रोक्ता वेदान्तवेदिभिः ।
पुत्रे मित्रे कलत्रे च रिपौ स्वात्मनि संततम् ॥ १२ ॥

ब्रह्मभाव इति । ब्रह्मात्मैकत्वे मनसश्चरणं ब्रह्मचर्यम् । श्रूयते हि—
" येषां तपो ब्रह्मचर्यं येषु सत्यं प्रतिष्ठितम् ।
तेषामसौ विरजो ब्रह्मलोको न येषु जिह्ममनृतं न माया च " इति ।
अत्र परमपरं ब्रह्मचर्यं विवक्षितम् ।
आत्मवदिति । अनुकम्पा रक्षाभिमुखी बुद्धिः । यदुक्तमागमे—
" रोगार्तस्य रिपोर्वाऽपि मित्रस्यान्यस्य वा पुनः ।
तद्रक्षाभिमुखी बुद्धिर्दयैषा भाषिता बुधैः " इति ।
पुत्रे मित्र इति । तदुक्तं गीतासु—
" सुहृन्मित्रार्युदासीनमध्यस्थद्वेष्यबन्धुषु ॥
साधुष्वपि च पापेषु समबुद्धिर्विशिष्यते " इति ॥ ११ ॥ १२ ॥

ऐकरूप्यं मुने यत्तदार्जवं प्रोच्यते मया ।
कायेन मनसा वाचा शत्रुभिः परिपीडिते ॥ १३ ॥

कायेनेति । त्रिभिरपि करणैः पीडने चित्तविक्षेपविरहः क्षमा ॥ १३ ॥

चित्तक्षोभनिवृत्तिर्या क्षमा सा मुनिपुंगव ।
वेदादेव विनिर्मोक्षः संसारस्य न चान्यथा ॥ १४ ॥

१ घ. प्राणा वा । २ घ. ऐक्यरू ।

वेदादेवेति। वेदविप्लावकवचनेषु सत्स्वपि वेदविरुद्धधर्मपरिहारेण वैदिकधर्मेषु स्थैर्यमपरमा धृतिः ॥ १४ ॥

इति विज्ञाननिष्पत्तिर्धृतिः प्रोक्ता हि वैदिकैः।
अहमात्मा न मर्त्योऽस्मीत्येवमप्रच्युता मतिः ॥ १५ ॥

परमामाह—अहमात्मेति। उक्ता हि धृतिर्देहादिविविक्तात्मविषयेति परमा धृतिः ॥ १५ ॥

या सा प्रोक्ता धृतिः श्रेष्ठा मुने वेदैकवेदिभिः।
अल्पमिष्टाशनाभ्यां तु नास्ति योगः कथंचन ॥ १६ ॥

अल्पेति। अल्पाशने तु धातुसंक्षोभः। अधिकेऽजीर्णं निद्रालस्यादि वा। अतो मिताहारो योगाङ्गमिति। उक्तं च—

"अन्नेन कुक्षेर्द्वावंशौ पानेनैकं प्रपूरयेत्।
प्राणसंचरणार्थं तु चतुर्थमवशेषयेत् ॥
गुरूणामर्धसौहित्यं लघूनां नातितृप्तता"

इत्यादि वैद्यशास्त्रोक्तं द्रष्टव्यम् ॥ १६ ॥

तस्माद्योगानुगुण्येन भोजनं मितभोजनम्।
स्वदेहमलनिर्मोक्षो मृज्जलाभ्यां महामुने ॥ १७ ॥

स्वदेहेति।

"शौचं तु द्विविधं प्रोक्तं बाह्यमाभ्यन्तरं तथा।
मृज्जलाभ्यां भवेद्बाह्यं भावशुद्धिस्तथाऽऽन्तरम्"।

इति स्मरणात् ॥ १७ ॥

यत्तच्छौचं भवेद्बाह्यं मानसं मननं विदुः।
अहं शुद्ध इति ज्ञानं शौचं वाञ्छन्ति पण्डिताः ॥ १८ ॥

अहं शुद्ध इति।

"स्थानाद्बीजादुपष्टम्भान्निष्पन्दान्निधनादपि।
कायमाधेयशौचत्वात्पण्डिता ह्यशुचिं विदुः"।

अतस्तदविवेक एवाशौचं तद्विवेकज्ञानं शौचमित्यर्थः ॥ १८ ॥

अत्यन्तमलिनो देहो देही चात्यन्तनिर्मलः।
उभयोरन्तरं ज्ञात्वा कस्य शौचं विधीयते ॥ १९ ॥

---

१ घ. निवृत्तिः।

ज्ञानशौचं परित्यज्य बाह्ये यो रमते नरः ।
स मूढः काञ्चनं त्यक्त्वा लोष्टं गृह्णाति सुव्रत ॥ २० ॥
ज्ञानामृतेन शुद्धस्य कृतकृत्यस्य योगिनः ।
कर्तव्यं नास्ति लोकेऽस्मिन्नस्ति चेन्न स तत्त्ववित् ॥ २१ ॥

विवेकज्ञानस्यैव शौचत्वे हेतुमाह—अत्यन्तमलिन इति ॥१९॥२०॥२१॥

लोकत्रयेऽपि कर्तव्यं किंचिन्नास्त्यात्मवेदिनः ।
इहैव जीवन्मुक्तास्त इह चेदिति हि श्रुतिः ॥ २२ ॥
तस्मात्सर्वप्रयत्नेन मुनेऽहिंसादिसाधनैः ।
आत्मानमक्षरं ब्रह्म विद्धि ज्ञानात्तु वेदजात् ॥ २३ ॥

इति श्रीस्कन्दपुराणे सूतसंहितायां ज्ञानयोगखण्डे यमविधिनिरूपणं नाम त्रयोदशोऽध्यायः ॥ १३ ॥

किंचिदिति । किमपि नास्ति । इहैव जीवन्मुक्तत्वे श्रुतिमुदाहरति—इह चेदिति ।

"इह चेदवेदीदथ सत्यमस्ति न चेदिहावेदीन्महती विनष्टिः"

इति तलवकारोपनिषदीत्यर्थः ॥ २२ ॥ २३ ॥

इति श्रीसूतसंहितातात्पर्यदीपिकायां ज्ञानयोगखण्डेऽष्टाङ्गयोगे यमविधिनिरूपणं नाम त्रयोदशोऽध्यायः ॥ १३ ॥

( अथ चतुर्दशोऽध्यायः )

ईश्वर उवाच—

अथातः संप्रवक्ष्यामि नियमान्मुनिसत्तम ।
तपः संतोष आस्तिक्यं दानमीश्वरपूजनम् ॥ १ ॥
सिद्धान्तश्रवणं चैव ह्रीर्मतिश्च जपो व्रतम् ।
एते च नियमाः प्रोक्ता योगविद्भिर्महात्मभिः ॥ २ ॥

१ क- "रञ्जनम्" ।

यतो यमवन्नियमा अपि योगाङ्गमतस्तदनन्तरं तान्वक्तुं प्रतिजानीते—अथात इति ॥ १ ॥ २ ॥

तानहं क्रमशो वक्ष्ये शृणु श्रद्धापुरःसरम् ।
वेदोक्तेन प्रकारेण कृच्छ्रचान्द्रायणादिभिः ॥ ३ ॥

अपरं तप आह—वेदोक्तेनेति । कृच्छ्रचान्द्रायणादिस्वरूपं प्रागुक्तम् ॥ ३ ॥

शरीरशोषणं यत्तत्तप इत्युच्यते बुधैः ।
कोऽहं मोक्षः कथं केन संसारं प्रतिपन्नवान् ॥ ४ ॥
इत्यालोचनमर्थज्ञास्तपः शंसन्ति पण्डिताः ।
यदृच्छालाभतो नित्यं प्रीतिर्या जायते नृणाम् ॥ ५ ॥

परमं तप आह—कोऽहमिति । उक्तं हि—

"मनसश्चेन्द्रियाणां च ऐकाग्र्यं परमं तपः ।
तज्ज्यायः सर्वधर्मेभ्यः स धर्मः परमो मतः" इति ॥ ४ ॥ ५ ॥

तं संतोषं विदुः प्राज्ञाः परिज्ञानैकतत्पराः ।
ब्रह्मादिलोकपर्यन्ताद्विरक्तस्य परात्मनि ॥ ६ ॥
प्रियं यत्तन्महाप्राज्ञाः संतोषं परमं विदुः ।
श्रौते स्मार्ते च विश्वासो यत्तदास्तिक्यमुच्यते ॥ ७ ॥
न्यायार्जितं धनं चान्नं श्रद्धया वैदिके द्विजे ।
अन्यद्वा यत्प्रदीयेत तद्दानं प्रोच्यते मया ॥ ८ ॥
अवैदिकाय विप्राय दत्तं यन्मुनिपुङ्गव ।
नोपकाराय तत्तस्य भस्मनीव हुतं हविः ॥ ९ ॥

परमं संतोषमाह—ब्रह्मादीति । श्रूयते हि—

"ते ये शतं बृहस्पतेरानन्दाः, स एकः प्रजापतेरानन्दः, श्रोत्रियस्य चाकामहतस्य" इति ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥

ब्रह्माणं विष्णुमीशानं वैश्यक्षत्रियवाडवैः ।
यथाशक्त्यर्चनं भक्त्या यत्तदीश्वरपूजनम् ॥ १० ॥

---

१ घ. तन्नपः । २ ग. °रक्तः परमात्म° । ३ क. ग. घ. °शक्त्यार्चन° ।

रागाद्यपेतं हृदयं वागदुष्टाऽनृतादिना ।
हिंसाविरहितः काय एतच्चेश्वरपूजनम् ॥ ११ ॥

ब्रह्माणामिति । वैश्यैर्ब्रह्माणं क्षत्रियैर्विष्णुम् । यद्वा ब्राह्मणास्तैरीशानं स्वीकृत्य यदर्चनं तदित्यर्थः ॥ १० ॥ ११ ॥

सत्यं ज्ञानमनन्तं च परानन्दं ध्रुवं परम् ।
प्रत्यगित्यवगत्यन्तं वेदान्तश्रवणं बुधाः ॥ १२ ॥

प्रत्यगिति । अवगतिरापरोक्ष्यम् ॥ १२ ॥

सिद्धान्तश्रवणं प्राहुर्द्विजानां मुनिसत्तम ।
शूद्राणां च विरक्तानां तथा स्त्रीणां महामुने ॥ १३ ॥
सिद्धान्तश्रवणं प्रोक्तं पुराणश्रवणं बुधैः ।
वेदलौकिकमार्गेषु कुत्सितं कर्म यद्भवेत् ॥ १४ ॥
तस्मिन्भवति या लज्जा ह्रीस्तु सैवेति कीर्तिता ।
वैदिकेषु हि सर्वेषु श्रद्धया सा मतिर्भवेत् ॥ १५ ॥

तथा स्त्रीणामिति । त्रैवर्णिकस्त्रीणां तु श्रौते विकल्प उक्तः ॥१३॥१४॥१५॥

गुरुणा चोपदिष्टोऽपि तन्त्रसंबन्धवर्जितः ।
वेदोक्तेनैव मार्गेण मन्त्राभ्यासो जपः स्मृतः ॥ १६ ॥
कल्पे सूत्रेऽथ वा वेदे धर्मशास्त्रे पुराणके ।
इतिहासेऽनुवृत्तिर्या स जपः प्रोच्यते मया ॥ १७ ॥

उपदिष्टोऽपीति । न पुनः पुस्तकपाठादिमात्रेण ज्ञात इत्यर्थः । तन्त्रसंबन्धेति । कापालं नाकुलं वाममित्यादिवेदविरुद्धागमसंपर्करहित इत्यर्थः ॥ १६ ॥ १७ ॥

या वेदबाह्याः स्मृतयो याश्च काश्च कुदृष्टयः ।
सर्वास्ता निष्फलाः प्रेत्य तमोनिष्ठा हि ताः स्मृताः ॥ १८ ॥

वेदविरुद्धतर्कसंबन्धत्यागे कारणमाह—या वेदबाह्या इति ॥ १८ ॥

---

१ घ. ङ. 'द्विभिः । हिं' । २ ग. अपे । ३ घ. 'से प्रवृ' । ङ. 'रो निवृ' । ४ क. 'न्त्रसंबन्ध' ।

श्रेयान्स्वधर्मो विगुणः परधर्मात्स्वनुष्ठितात् ।
स्वधर्मे निधनं श्रेयः परधर्मो भयावहः ॥ १९ ॥
तस्मात्सर्वप्रयत्नेन वेदमन्त्रं सदा जपेत् ।
जपश्च द्विविधः प्रोक्तो वाचिको मानसस्तथा ॥ २० ॥

वेदोक्तधर्मसम्यगनुष्ठानाशक्तस्यापि यथाशक्ति तदनुष्ठानमेव न तु विरुद्धतथार्थानुष्ठानमित्याह—श्रेयान्स्वधर्म इति ॥ १९ ॥ २० ॥

वाचिकोपांशुरुच्चैश्च द्विविधः परिकीर्तितः ।
मानसो मननध्यानभेदाद्द्वैविध्यमास्थितः ॥ २१ ॥
उच्चैर्जपादुपांशुश्च सहस्रगुण उच्यते ।
मानसश्च तथोपांशोः सहस्रगुण उच्यते ॥ २२ ॥

वाचिकोपांशुरिति । संधिश्छान्दसः ॥ २१ ॥ २२ ॥

उच्चैर्जपस्तु सर्वेषां यथोक्तफलदो भवेत् ।
नीचैः श्रुतो न चेत्सोऽपि श्रुतश्चेन्निष्फलो भवेत् ॥ २३ ॥

उच्चैर्जपादुपांशुजपः फलेन सहस्रगुण उक्तः । उच्चैर्जपस्तु कियत्फल इत्यत आह—उच्चैर्जपस्तु सर्वेषामिति । यो मन्त्रजपो यावतः फलस्य साधनत्वेन शास्त्रे कथितः स तावत्फलस्तत्सहस्रगुणस्तन्मन्त्रोपांशुजप इत्यर्थः । उच्चैर्जपोऽपि यथा नीचैर्म्लेच्छैर्न श्रूयते तथाऽरण्यादौ विविक्तदेशे क्रियते चेदुक्तफलो भवति । प्रमादान्नीचैः श्रुतश्चेत्तस्य यथोक्तमपि फलं नास्तीत्याह—नीचैरिति ॥ २३ ॥

ऋषिं छन्दोऽधिदैवं च ध्यायमानो जपेन्नरः ।
प्रसन्नगुरुणा पूर्वमुपदिष्टं त्वनुज्ञया ॥ २४ ॥

दशमं नियमव्रतमाह—प्रसन्नेति । प्रतिबन्धकपापनिरासद्वारा चित्तशुद्धये पुण्योपचयद्वारा फलानुकूल्याय च गुर्वनुज्ञया क्रियमाणमुपवासादिकं व्रतमित्यर्थः ॥ २४ ॥

धर्मार्थमात्मशुद्ध्यर्थमुपायग्रहणं व्रतम् ।
अथवाऽऽथर्वणैर्मन्त्रैर्गृहीत्वा भस्म पाण्डुरम् ॥ २५॥

---

१ क. ख. ग. घ. °गुणोऽनुक°। २ ङ. यावत्फल°। ३ घ. °मुपादेयम्।

व्रतशब्दस्यार्थान्तरमाह—अथवेति ॥ २५ ॥

सर्वाङ्गोद्धूलनं यत्तद्व्रतं प्रोक्तं मनीषिभिः ।
एतद्वेदशिरोनिष्ठाः प्राहुः पाशुपतं मुने ॥ २६ ॥

एतद्वेदेति । अथर्वशिरसि—" अग्निरित्यादिना भस्म गृहीत्वा निमृज्याङ्गानि संस्पृशेद्व्रतमेतत्पाशुपतम् " इत्युक्तमित्यर्थः ॥ २६ ॥

केचिच्छिरोव्रतं प्राहुः केचिदत्याश्रमं विदुः ।
केचित्तद्व्रतमित्यूचुः केचिच्छांभवमैश्वरम् ॥ २७ ॥

व्रतपदस्य मतभेदेनार्थान्तराण्याह—केचिदिति । " शिरोव्रतं विधिवद्यैस्तु चीर्णम् " इत्याथर्वणिका आहुरित्यर्थः । केचिदिति । " अत्याश्रमिभ्यः परमं पवित्रम् " इति श्वेताश्वतरशाखिनो व्यवहरन्तीत्यर्थः । व्रतं नाम शांभवमित्यन्ये, ऐश्वरमित्यपरे कथयन्तीत्यर्थः । अथवा यथोक्तपाशुपतव्रतमेव शिरोव्रतत्याश्रमशांभवैश्वरशब्दैराथर्वणिकादिभिरभिधीयत इत्यर्थः ॥ २७ ॥

अस्य व्रतस्य माहात्म्यमागमान्तेषु संस्थितम् ।
सर्वपापहरं पुण्यं सम्यग्ज्ञानप्रकाशकम् ॥ २८ ॥

[1] आगमान्तेष्वपरेष्वपि बहुषु वेदान्तेषु ॥ २८ ॥

यः पशुस्तत्पशुत्वं च व्रतेनानेन न त्यजेत् ।
तं हत्वा न स पापीयानिति वेदान्तनिश्चयः ॥ २९ ॥

यः पशुरिति । सुकरसर्वभोगोपकरणं परमपुरुषार्थसाधनं चैतत्पाशुपतव्रतम् । अमुना व्रतेन यः पशुः स्वात्मनः पशुत्वं न जहाति स आत्मघातकत्वादाततायी । अतः—

" आततायिवधे दोषो हन्तुर्नास्त्येव कश्चन "

इति वेदविदः स्मरन्तीत्यर्थः ॥ २९ ॥

सर्वमुक्तं समासेन नियमं मुनिसत्तम ।
अनेन विधिना युक्तो भस्मज्योतिर्भविष्यति ॥ ३० ॥

---

१ ग. °त्याश्रम° । २ ङ °मान्तरेषु । ३ घ. °नान्येन ।

इति श्रीस्कन्दपुराणे सूतसंहितायां ज्ञानयोगखण्डे नियमविधिकथनं नाम चतुर्दशोऽध्यायः ॥ १४ ॥

भस्मज्योतिरिति । भस्मैवोक्तरीत्या तत्त्वावबोधहेतुत्वाज्ज्योतिर्यस्य स तथोक्तः ॥ ३० ॥

इति श्रीसूतसंहितातात्पर्यदीपिकायां ज्ञानयोगखण्डे नियमविधिकथनं नाम चतुर्दशोऽध्यायः ॥ १४ ॥

( अथ पञ्चदशोऽध्यायः )

ईश्वर उवाच—

आसनानि पृथग्वक्ष्ये शृणु वाचस्पतेऽधुना ।
स्वस्तिकं गोमुखं पद्मं वीरं सिंहासनं तथा ॥ १ ॥
भद्रं मुक्तासनं चैव मयूरासनमेव च ।
सुखासनसमाख्यं च नवमं मुनिपुंगव ॥ २ ॥

यमनियमानुक्त्वा क्रमप्राप्तमासनं बृहस्पतिं प्रति वक्तुमीश्वरः प्रतिजानीते—आसनानीति । तानि नव तावदुद्दिशति—स्वस्तिकमिति ॥ १ ॥ २ ॥

जानूर्वोरन्तरे विप्र कृत्वा पादतले उभे ।
समग्रीवशिरस्कस्य स्वस्तिकं परिचक्षते ॥ ३ ॥

स्वस्तिकस्य लक्षणमाह—जानूर्वोरिति । दक्षिणजानूरुमध्ये वामपादतलं वामजानूरुमध्ये दक्षिणपादतलं च विन्यस्य ऋजुकाय उपविशेदेतत्स्वस्तिकासनमित्यर्थः ॥ ३ ॥

सव्ये दक्षिणगुल्फं तु पृष्ठपार्श्वे निवेशयेत् ।
दक्षिणेऽपि तथा सव्यं गोमुखं तत्प्रचक्षते ॥ ४ ॥

सव्ये वामे तस्मिन्पृष्ठपार्श्वे दक्षिणगुल्फं दक्षिणे च पृष्ठपार्श्वे सव्यं वामं विन्यसेदेतद्गोमुखासनम् ॥ ४ ॥

---

१ घ. °सिता° । २ घ. ङ. वामगुल्फ वि° ।

अङ्गुष्ठावपि गृह्णीयाद्धस्ताभ्यां व्युत्क्रमेण तु ।[१]
ऊर्वोरुपरि विप्रेन्द्र कृत्वा पादतलद्वयम् ।
पद्मासनं भवेदेतत्सर्वरोगभयापहम् ॥ ५ ॥

अङ्गुष्ठावपीति । दक्षिणस्योरोरुपरि वामपादतलं विन्यस्य तदीयमङ्गुष्ठं पश्चिमपथा गतेन वामहस्तेन गृह्णीयात् । एवं वामस्योरोरुपरि न्यस्तस्य दक्षिणपादतलस्याङ्गुष्ठं पश्चिमपथा गतेन दक्षिणहस्तेनेत्येतत्पद्मासनमुक्तफलमित्यर्थः ॥ ५ ॥

दक्षिणोत्तरपादं तु सव्य ऊरुणि विन्यसेत् ।
ऋजुकायः सुखासीनो वीरासनमुदाहृतम् ॥ ६ ॥

दक्षिणमुत्तरपादं वाम पादाग्रं सव्ये वाम ऊरौ विन्यसेत् । एतच्चोपलक्षणम् । सव्यं वामं दक्षिण ऊरावेतद्वीरासनमित्यर्थः । दक्षिणोत्तरपादं तु दक्षिणोरुणि विन्यसेदिति पाठान्तरम् । आगमे चोभयमुक्तम्—ऊर्वोरुपरि कुर्वीत पादौ वीरं चेति ॥ ६ ॥

गुल्फौ च वृषणस्याधः सीवन्याः पार्श्वयोः क्षिपेत् ।
दक्षिणं सव्यगुल्फेन वामं दक्षिणगुल्फतः ॥ ७ ॥
हस्तौ च जान्वोः संस्थाप्य स्वाङ्गुलीश्च प्रसार्य च ।
नासाग्रं च निरीक्षेत भवेत्सिंहासनं हि तत् ॥ ८ ॥

सीवन्या वामपार्श्वे दक्षिणगुल्फं दक्षिणपार्श्वे च वामगुल्फं प्रसारिताङ्गुलिहस्तौ जानुमूर्ध्नोर्विन्यस्य नासाग्रदर्शनं सिंहासनम् ॥ ७ ॥ ८ ॥

गुल्फौ च वृषणस्याधः सीवन्याः पार्श्वयोः क्षिपेत् ॥ ९ ॥
पार्श्वपादौ च पाणिभ्यां दृढं बद्ध्वा सुनिश्चलः ।
भद्रासनं भवेदेतद्विषरोगविनाशनम् ॥ १० ॥

भद्रासनमाह—गुल्फौ चेति । सीवन्या वामपार्श्वे वामगुल्फो दक्षिणपार्श्वे दक्षिणगुल्फो यथा भवति तथा पादतले परस्पराभिमुखे सीवन्या अधस्ताद्विनिवेश्य दक्षिणोरुं दक्षिणपाणिना वामोरुं च वामपाणिना सम्यङ्निष्पीड्यावस्थानं भद्रासनमित्यर्थः ॥ ९ ॥ १० ॥

---

१ घ. 'दृं वामाद्'। २ क. ङ. निरीक्षेत।

निपीड्य सीवनीं सूक्ष्मां दक्षिणोत्तरगुल्फतः ।
वामं याम्येन गुल्फेन मुक्तासनमिदं भवेत् ॥ ११ ॥
मेढ्रोपरि विनिक्षिप्य सव्यगुल्फं तथोपरि ।
गुल्फान्तरं च संक्षिप्य मुक्तासनमिदं भवेत् ॥ १२ ॥

सीवन्या अधस्ताद्वामो गुल्फस्तस्याधस्ताद्दक्षिणः । अथवा मेढ्रस्योपरि सव्यो गुल्फस्तस्योपरि दक्षिण इति द्वेधा मुक्तासनमित्याह—निपीड्य सीवनीमिति ॥ ११ ॥ १२ ॥

कूर्पराग्रौ मुनिश्रेष्ठ निःक्षिपेन्नाभिपार्श्वयोः ।
भूम्यां पाणितलद्वंद्वं निःक्षिप्यैकाग्रमानसः ॥ १३ ॥
समुन्नतशिरःपादो दण्डवद्व्योम्नि संस्थितः ।
मयूरासनमेतत्स्यात्सर्वपापप्रणाशनम् ॥ १४ ॥

कूर्पराग्राविति । तथा चाऽऽगमे—

"भुवि पाणितले कृत्वा कूर्परौ नाभिपार्श्वगौ ।
समुन्नतशिरःपादं दण्डवद्व्योमसंस्थितम् ॥
कुर्याद्देहमिति प्रोक्तं मायूरं पापनाशनम्" इति ॥ १३ ॥ १४ ॥

येन केन प्रकारेण सुखं धैर्यं च जायते ।
तत्सुखासनमित्युक्तमशक्तस्तत्समाश्रयेत् ॥ १५ ॥

येन केनेति । तथा च पातञ्जले सूत्रम्—"स्थिरसुखमासनम्" इति ॥ १५ ॥

आसनं विजितं येन जितं तेन जगत्त्रयम् ।
आसनं सकलं प्रोक्तं मुने वेदविदां वर ॥ १६ ॥

जगत्त्रयमिति । आसनजयस्य चित्तैकाग्र्यहेतुत्वात् । शीतोष्णादिद्वंद्वैरनुपघाताच्च । आह पतञ्जलिः—"ततो द्वंद्वानभिघातः" इति ॥ १६ ॥

अनेन विधिना युक्तः प्राणायामं सदा कुरु ॥ १७ ॥

इति श्रीस्कन्दपुराणे सूतसंहितायां ज्ञानयोगखण्ड आसनविधिनिरूपणं नाम पञ्चदशोऽध्यायः ॥ १५ ॥

---

१ ग. ङ. याम्येन । २ क. पादृत॰ । ३ ङ. नफर॰ ।

अनेनेति। आसनवतैव हि प्राणायामः कर्तव्य इत्याह—विधिनेति। श्वासप्रश्वासयोर्गतिविच्छेदः प्राणायाम इति ॥ १७॥

इति श्रीसूतसंहितातात्पर्यदीपिकायां ज्ञानयोगखण्डे, आसनविधिनिरूपणं नाम पञ्चदशोऽध्यायः ॥ १५ ॥

---

( अथ षोडशोऽध्यायः )

---

ईश्वर उवाच—

अथातः संप्रवक्ष्यामि प्राणायामं यथाविधि।
प्राणायाम इति प्रोक्तो रेचपूरककुम्भकैः ॥ १ ॥
वर्णत्रयात्मकाः प्रोक्ता रेचपूरककुम्भकाः।
स एव प्रणवः प्रोक्तः प्राणायामश्च तन्मयः ॥ २ ॥

यतो जितासनस्यैव प्राणायामो निरुपद्रवः सिध्यति, अतस्तदनन्तरं तत्प्रतिजानीते—अथात इति ॥ १ ॥ २ ॥

इडया वायुमाकृष्य पूरयित्वोदरस्थितम्।
शनैः षोडशभिर्मात्रैरकारं तत्र संस्मरेत् ॥ ३ ॥

उक्तं वर्णात्मकत्वं विवृणोति–इडयेति। मात्रैर्मात्राभिः। तल्लक्षणमुक्तम्—

'कालेन यावता स्वीयो हस्तः स्वजानुमण्डलम्।
पर्येति मात्रा सा तुल्या स्वयैकश्वाससमात्रया' इति।

अकारं ब्रह्मात्मकम् ॥ ३ ॥

पूरितं धारयेत्पश्चाच्चतुःषष्ट्या तु मात्रया।
उकारमूर्तिमत्रापि संस्मरन्प्रणवं जपेत् ॥ ४ ॥
यावद्वा शक्यते तावद्धारयञ्जपसंयुतम्।
पूरितं रेचयेत्पश्चान्मकारेणानिलं बुधः ॥ ५ ॥
शनैः पिङ्गलया विप्र द्वात्रिंशन्मात्रया पुनः।
प्राणायामो भवेदेष ततश्चैवं समभ्यसेत् ॥ ६ ॥

---

१ क. °क्षितः।' २ ख. °त्रिभि.। ३ ग. घ. °निमात्रा°।

उकारमूर्ति विष्णुमूर्तिम् ॥ ४ ॥ ५ ॥ ६ ॥

पुनः पिङ्गलयाऽऽपूर्य मात्रैः षोडशभिस्तथा ।
मकारमूर्तिमत्रापि स्मरेदेकाग्रमानसः ॥ ७ ॥
धारयेत्पूरितं विद्वान्प्रणवं विंशतिद्वयम् ।
जपेदत्र स्मरेन्मूर्तिमुकाराख्यां तु वैष्णवीम् ॥ ८ ॥
अकारं तु स्मरेत्पश्चाद्रेचयेदिडयाऽनिलम् ।
एवमेव पुनः कुर्यादिडयाऽऽपूर्य बुद्धिमान् ॥ ९ ॥

मकारमूर्ति रुद्रम् ॥ ७ ॥ ८ ॥ ९ ॥

एवं समभ्यसेन्नित्यं प्राणायामं यतीश्वरः ।
अथवा प्राणमारोप्य पूरयित्वोदरस्थितम् ॥ १० ॥
प्रणवेन समायुक्तां व्याहृतीभिश्च संयुताम् ।
गायत्रीं संजपेच्छुद्धः प्राणसंयमने त्रयम् ॥ ११ ॥
पुनश्चैवं त्रिभिः कुर्याद्गृहस्थश्च त्रिसंधिषु ।
ब्रह्मचर्याश्रमस्थानां वनस्थानां महामुने ॥ १२ ॥

प्रणवव्याहृतिपूर्विकां गायत्रीं वा कुम्भके जपित्वेत्याह—अथवेति ॥ १० ॥ ॥ ११ ॥ १२ ॥

प्राणायामो विकल्पेन प्रोक्तो वेदान्तवेदिभिः ।
द्विजवत्क्षत्रियस्योक्तः प्राणायामो महामुने ॥ १३ ॥

विकल्पेनेति । उक्तविकल्पेनेत्यर्थः । क्षत्रियवैश्ययोरपि वैदिकमन्त्राधिकाराद्विजवदेव प्रणवगायत्रीभ्यां प्राणायाम इत्याह—द्विजवदिति ॥ १३ ॥

विरक्तानां प्रबुद्धानां वैश्यानां च तथैव च ।
शूद्राणां च तथा स्त्रीणां प्राणसंयमनं मुने ॥ १४ ॥
नमोन्तं शिवमन्त्रं वा वैष्णवं वा न चान्यथा ।
नित्यमेवं प्रकुर्वीत प्राणायामांस्तु षोडश ॥ १५ ॥

१ ड. "कार मि" । २ ग. घ. "तिमात्रा" ३ ख. तु ।

ब्रह्महत्यादिभिः पापैर्मुच्यते मासमात्रतः ।
षण्मासाभ्यासतो विप्रा वेदनेच्छामवाप्नुयात् ॥ १६ ॥

शूद्राणामिति । वेदानधिकारात् ॥ १४ ॥ १५ ॥ १६ ॥

वत्सराद्ब्रह्म विद्वान्स्यात्तस्मान्नित्यं समभ्यसेत् ।
योगाभ्यासरतो नित्यं स्वधर्मनिरतश्च यः ॥ १७ ॥
प्राणसंयमनेनैव ज्ञानान्मुक्तो भविष्यति ।
बाह्यादापूरणं वायोरुदरे पूरको हि सः ॥ १८ ॥
संपूर्णकुम्भवद्वायोर्धारणं कुम्भको भवेत् ।
बहिर्विरेचनं वायोरुदराद्रेचकः स्मृतः ॥ १९ ॥
प्रस्वेदजनको यस्तु प्राणायामेषु सोऽधमः ।
कम्पनं मध्यमं विद्यादुत्थानं चोत्तमं तथा ॥ २० ॥
पूर्वं पूर्वं प्रकुर्वीत यावदुत्तमसंभवः ।
संभवत्युत्तमे प्राज्ञः प्राणायामे सुखी भवेत् ॥ २१ ॥

योगाभ्यासेति । यः स्वधर्मनिरतः सन्योगाभ्यासरतो भवति तस्य प्राणायाम एवोक्तरीत्या ज्ञानद्वारा मोक्षसाधनमित्यर्थः ॥ १७ ॥ १८ ॥ १९ ॥ ॥ २० ॥ २१ ॥

प्राणायामेन चित्तं तु शुद्धं भवति सुव्रत ।
चित्ते शुद्धे मनः साक्षात्प्रत्यग्ज्योतिष्यवस्थितम् ॥ २२ ॥
प्राणश्चित्तेन संयुक्तः परमात्मनि तिष्ठति ।
प्राणायामपरस्यास्य पुरुषस्य महात्मनः ॥ २३ ॥

प्राणायामेन चित्तमिति । आह पतञ्जलिः—" ततः क्षीयते प्रकाशावरणं धारणासु योग्यता मनसः " इति ॥ २२ ॥ २३ ॥

देहश्चोत्तिष्ठते तेन किंचिज्ज्ञानाद्विमुक्तता ।
रेचकं पूरकं मुक्त्वा कुम्भकं नित्यमभ्यसेत् ॥ २४ ॥

---

१ घ. 'साभ्यासतो विप्र वे' ।

सर्वपापविनिर्मुक्तः सम्यग्ज्ञानमवाप्नुयात् ।
मनोजयत्वमाप्नोति पलितादि च नश्यति ॥ २५ ॥
प्राणायामैकनिष्ठस्य न किंचिदपि दुर्लभम् ।
तस्मात्सर्वप्रयत्नेन प्राणायामं समभ्यसेत् ॥ २६ ॥
विनियोगान्प्रवक्ष्यामि प्राणायामस्य सुव्रत ।
संध्ययोर्ब्राह्मकाले वा मध्याह्ने वाऽथवा सदा ॥ २७ ॥

किंचिज्ज्ञानादिति । प्राणायामो हि सत्त्वशुद्धिं जनयति । तया ज्ञानं भवति । श्रूयते हि—" ज्ञानप्रसादेन विशुद्धसत्त्वस्ततस्तु तं पश्यते निष्कलं ध्यायमानः " इति ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥

बाह्यप्राणं समाकृष्य पूरयित्वोदरेऽनघ ।
नासाग्रे नाभिमध्ये च पादाङ्गुष्ठे च धारयेत् ॥ २८ ॥

नासाग्रं नाभिमध्यं पादाङ्गुष्ठं च चिन्तयतस्तत्र चित्तं स्थूलं भवति तेन च प्राणो जीयत इत्यर्थः । एतद्योगप्रकारः सविशेषमन्यत्रोक्तः—

" इडया वायुमाकृष्य पूरयित्वोदरे स्थितम् ।
वामाङ्घ्यङ्गुष्ठके नाभौ नासाग्रे धारयेत्स्थिरम् ॥
पुनः पिङ्गलयाऽऽपूर्य दक्षाङ्घ्यङ्गुष्ठकेऽनिलम् ।
नाभौ नासाग्रके प्राग्वद्धारयेद्ध्यानसंयुतः ।
द्वाभ्यामथवा वायुं पूरितं धारयेत्स्थिरम् ।
अनेनाभ्यासयोगेन प्राणवायुर्जितो भवेत् " इति ॥ २८ ॥

सर्वरोगविनिर्मुक्तो जीवेद्वर्षशतं नरः ।
नासाग्रधारणाद्वायुर्जितो भवति सुव्रत ॥ २९ ॥
सर्वरोगविनाशः स्यान्नाभिमध्ये च धारणात् ।
शरीरलघुता विप्र पादाङ्गुष्ठनिरोधनात् ॥ ३० ॥
जिह्वया वायुमाकृष्य यः पिबेत्सततं नरः ।
श्रमदाहविनिर्मुक्तो भवेन्नीरोगतामियात् ॥ ३१ ॥

एतत्त्रयस्य पृथक्फलमाह—नासाग्रेति ॥ २९ ॥ ३० ॥ ३१ ॥

जिह्वया वायुमाकृष्य जिह्वामूले निरोधयेत् ।
पिबेदमृतमव्यग्रं सकलं सुखमाप्नुयात् ॥ ३२ ॥
इडया वायुमाकृष्य भ्रुवोर्मध्ये निरोधयेत् ।
यः पिबेदमृतं शुद्धं व्याधिभिर्मुच्यते हि सः ॥ ३३ ॥
इडया वेदतत्त्वज्ञ तथा पिङ्गलयाऽपि च ।
नाभौ निरोधयेत्तेन व्याधिभिर्मुच्यते नरः ॥ ३४ ॥

जिह्वामूले निरोधयेच्चित्तं धारयेत् । तमेवात्यन्तशीतलममृतमयं वायुमव्यग्रं शनैः पिबेत् ॥ ३२ ॥ ३३ ॥ ३४ ॥

मासमात्रं त्रिसंध्यायां जिह्वयाऽऽरोप्य मारुतम् ।
अमृतं च पिबेन्नाभौ मन्दं मन्दं निरोधयेत् ॥ ३५ ॥
वातपित्तादिजा दोषा नश्यन्त्येव न संशयः ।
नासाभ्यां वायुमाकृष्य नेत्रद्वंद्वे निरोधयेत् ॥ ३६ ॥
नेत्ररोगा विनश्यन्ति तथा श्रोत्रनिरोधनात् ।
तथा वायुं समारोप्य धारयेच्छिरसि स्थिरम् ॥ ३७ ॥

जिह्वयाऽऽरोप्येति । जिह्वाग्रसंस्पर्शी यथा वायुर्भवति तथा काकचञ्चुपुटौ कृत्वा मन्दं मन्दं पवनमाकर्षन्नाभौ चित्तं धारयेदित्यर्थः॥३५॥३६॥३७॥

शिरोरोगा विनश्यन्ति सत्यमुक्तं बृहस्पते ।
स्वस्तिकासनमास्थाय समाहितमनास्तथा ॥ ३८ ॥

संमुखीकरणयोगमाह–स्वस्तिकासनमित्यादि ॥ ३८ ॥

अपानमूर्ध्वमाकृष्य प्रणवेन शनैः शनैः ।
हस्ताभ्यां बन्धयेत्सम्यक्कर्णादिकरणानि वै ॥ ३९ ॥

ऊर्ध्वमाकृष्याऽऽकुञ्च्य शनैः शनैः। त्वरया हि कृते नाभ्यन्तरमविष्टः पवनो व्यथयेत् ॥ ३९ ॥

अङ्गुष्ठाभ्यामुभे श्रोत्रे तर्जनीभ्यां च चक्षुषी ।
नासापुटावथान्याभ्यां प्रच्छाद्य करणानि वै ॥ ४० ॥

---

१ ख. °दा पुनः। ना° । २ क. ग. ङ. धारये° । ३ ग. °दाकृष्य नाभौ ।

आनन्दाविर्भवं यावत्तावन्मूर्धनि धारयेत् ।
प्राणः प्रयात्यनेनैव ब्रह्मरन्ध्रं महामुने ॥ ४१ ॥

वामदक्षिणहस्ताङ्गुष्ठाभ्यां श्रोत्रे । तर्जनीभ्यां चक्षुषी । मध्यमाभ्यां नासापुटौ च निरुध्य यावदानन्दाविर्भावो भवति तावद्ब्रह्मरन्ध्रे चित्तं धारयतः प्राणः सुषुम्नां प्रविशतीत्यर्थः ॥ ४० ॥ ४१ ॥

ब्रह्मरन्ध्रे गते वायौ नादश्चोत्पद्यतेऽनघ ।
शङ्खध्वनिनिभश्चाऽऽदौ मध्ये मेघध्वनिर्यथा ॥ ४२ ॥
शिरोमध्यगते वायौ गिरिप्रस्रवणं यथा ।
पश्चात्प्रीतो महाप्राज्ञ साक्षादात्मोन्मुखं भवेत् ॥ ४३ ॥

नादश्चोत्पद्यत इति । तद्भेदा हंसोपनिषदि दशधा कथिताः । चिणीति प्रथमः । चिणिचिणीति द्वितीयः । घण्टानादस्तृतीयः । शङ्खनादश्चतुर्थः । पञ्चमस्तन्त्रीनादः । षष्ठस्तालनादः । सप्तमो वेणुनादः । अष्टमो भेरीनादः । नवमो मृदङ्गनादः । दशमो मेघनाद इति ॥ ४२ ॥ ४३ ॥

पुनस्तज्ज्ञाननिष्पत्तिस्तया संसारनिह्नुतिः ।
दक्षिणोत्तरगुल्फेन सीवनीं पीडयेत्स्थिराम् ॥ ४४ ॥
सव्येतरेण गुल्फेन पीडयेद्बुद्धिमान्नरः ।
जान्वोरधः स्थितां संधिं स्मृत्वा देवं च त्र्यम्बकम् ॥ ४५ ॥
विनायकं च संस्मृत्य तथा वागीश्वरीं पुनः ।
लिङ्गनालात्समाकृष्य वायुमप्यग्रतो मुने ॥ ४६ ॥
प्रणवेनाग्नियुक्तेन बिन्दुयुक्तेन बुद्धिमान् ।
मूलाधारस्य विप्रेन्द्र मध्यमे तु निरोधयेत् ॥ ४७ ॥
निरुद्धवायुना दीप्तो वह्निर्दहति कुण्डलीम् ।
पुनः सुषुम्नया वायुर्वह्निना सह गच्छति ॥ ४८ ॥
एवमभ्यसतस्तस्य जितो वायुर्भवेद्ध्रुवम् ।
प्रस्वेदः प्रथमः पश्चात्कम्पनं मुनिसत्तम ॥ ४९ ॥

---

१ क. भापयेत् । २ घ.–ˆआसी मˆ । ३ ग. ˆमे ॥ ४७ ॥

उत्थानं च शरीरस्य चिह्नमेतज्जितेऽनिले ।
एवमभ्यसतस्तस्य मूलरोगो विनश्यति ॥ ५० ॥
भगंदरं च नष्टं स्यात्तथाऽन्ये व्याधयो मुने ।
पातकानि विनश्यन्ति क्षुद्राणि च महान्ति च ॥ ५१ ॥

उत्कर्षप्राणायाममाह—दक्षिणोत्तरेति । वामेन गुल्फेन पीडयित्वा जान्वो-रधः स्थितं तमेव वामगुल्कसंधिं दक्षिणगुल्फेन पीडयित्वा शिवविनायकवागी-शान्स्मरञ्छिङ्गनालं समाकृष्य निरुद्धस्य पवनस्य नाड्यन्तरप्रवेशपरिहारार्थ-माकुञ्चितोल्वणबन्धं कृत्वा रेफबिन्दुयुक्तं प्रणवमनुस्मरन्मूलाधारपवनं निरोध-येत् । मूलाधाराकुञ्चनलक्षणं मूलबन्धं कुर्यादित्यर्थः ।

अयमुत्कर्षप्राणायामयोग आगमे सविशेषो दर्शितः—
" अथोत्कर्षाभिधानस्य प्राणायामस्य संयमः ।
इडाधः सीवनीं सूक्ष्मां पीडयेद्वामगुल्फतः ॥
तद्गुल्फोपरि निक्षिप्य दक्षगुल्फं समं स्थिरम् ।
जङ्घयोरुसंधिं निश्छिद्रां बद्ध्वाऽऽसीत समाहितः ॥
मूलाधारे चतुष्पत्रे रक्तकिञ्जल्कशोभिते ।
मनसा प्रणवं ध्यायन्दक्षगुल्फं विलोकयन् ॥
यावन्मनोलयस्तस्मिंस्तावद्वायुं निरोधयेत् ।
अपानोऽनेन योगेन वह्निस्थानं व्रजेत्तदा ॥
आग्नेये मण्डले रक्ते त्रिकोणे देहधारकः ।
वैश्वानरो वसत्यग्निरपानादिप्रापकः ॥
अपानमग्निना सार्धं प्राणं तत्रैव निश्चलम् ।
धारयेत्प्रणवं ध्यायन्यावदग्निर्जितो भवेत् ॥
जातेऽग्निविजये सम्यगूर्ध्वं तद्वह्निमण्डलात् ।
कन्दनाभेरधस्ताच्च स्वाधिष्ठाने च षड्दले ॥
प्राणापानौ समारोप्य निश्चलं वह्निना सह ।
नाभिं विलोकयन्दृष्ट्या मनसा प्रणवं स्मरन् ॥
यावन्मनोलयस्तस्मिंस्तावद्वायुं निरोधयेत् ।
ततोऽग्निनाऽभ्यावर्तेन प्रबोधं याति कुण्डली ॥

१ क. ख. तेऽनले । २ ग. °थान्वा -श° ।

प्रबुद्धा कुण्डली कन्दनाभिरन्ध्रात्फणं स्वकम् ।
अपाकरोति तेनैतत्सुषुम्नामूलरन्ध्रकम् ॥
विवृतं भवति क्षिप्रं तस्मिन्वायुं प्रपूरयेत् ।
शनैः साग्निं सुषुम्नायामा मूर्ध्नः प्रणवं स्मरेत् ॥
धारयेन्मारुतं साग्निं सुषुम्नारन्ध्रमूर्धनि ।
मरुताऽऽपूरिते देहे सुसर्वाङ्गे सवह्निना ॥
तदात्मा दृश्यते मूर्ध्नि यथाऽऽकाशे प्रभाकरः " इति ॥ ४४ ॥

॥ ४५ ॥ ४६ ॥ ४७ ॥ ४८ ॥ ४९ ॥ ५० ॥ ५१ ॥

नष्टे पापे विशुद्धं स्याच्चित्तदर्पणमुत्तमम् ।
पुनर्ब्रह्मादिलोकेभ्यो वैराग्यं जायते हृदि ॥ ५२ ॥

अनेन योगेन न केवलमारोग्यं किं तु समाधानं ज्ञानमप्यपवर्गफलं भवतीत्याह—पुनर्ब्रह्मादीति ॥ ५२ ॥

विरक्तस्य तु संसाराज्ज्ञानं कैवल्यसाधनम् ।
तेन पाशापहानिः स्याज्ज्ञात्वा देवमिति श्रुतिः ॥५३॥
अहो ज्ञानामृतं मुक्त्वा मायया परिमोहिताः ।
परिभ्रमन्ति संसारे सदाऽसारे नराधमाः ॥ ५४ ॥

ज्ञात्वा देवमिति ।

" ज्ञात्वा देवं सर्वपाशापहानिः क्षीणैः क्लेशैर्जन्ममृत्युप्रहाणिः "

इति श्वेताश्वतरोपनिषदित्यर्थः ॥ ५३ ॥ ५४ ॥

ज्ञानामृतरसो येन सकृदास्वादितो भवेत् ।
स सर्वकार्यमुत्सृज्य तत्रैव परिधावति ॥ ५५ ॥
ज्ञानामृतरसः प्रायस्तेन नाऽऽस्वादितो भवेत् ।
यो वाऽन्यत्रापि रमते तद्विहायैव दुर्मतिः ॥ ५६ ॥

असारसंसारपरिभ्रमणं ज्ञानामृतरसापरिज्ञानादित्युक्तम् । तत्परिज्ञानवतस्तु तद्विरहमाह—ज्ञानामृतेति ॥ ५५ ॥ ५६ ॥

ज्ञानस्वरूपमेवाऽऽहुर्जगदेतद्विचक्षणाः ।
अर्थस्वरूपमज्ञानात्पश्यन्त्यन्ये कुदृष्टयः ॥ ५७ ॥

---

१ ग. 'वे-मरुतः सा' ।

यज्ञैर्देवत्वमाप्नोति तपोभिर्ब्रह्मणः पदम् ।
दानैर्भोगानवाप्नोति ज्ञानाद्ब्रह्माधिगच्छति ॥ ५८ ॥

चराचरजगज्जातस्य परशिवपरिकल्पितत्वेन वस्तुतस्तन्मयतां तत्त्वविदः पश्यन्तीत्याह—ज्ञानस्वरूपमिति । "सद्धीदं सर्वं सत्सदिति । चिद्धीदं सर्वं काशते काशते च" इति तापनीयश्रुतिः । ज्ञानात्पृथगर्थस्य पारमार्थिकत्वाभिमानस्त्वविवेकनिबन्धन इत्याह—अर्थेति ॥ ५७ ॥ ५८ ॥

कर्मणा केचिदिच्छन्ति कैवल्यं मुनिसत्तम ।
ते मूढा मुनिशार्दूल प्लवा ह्येत इति श्रुतिः ॥ ५९ ॥
आत्मैवेदं जगत्सर्वमिति जानन्ति पण्डिताः ।
अज्ञानेनाऽऽवृता मर्त्या न विजानन्ति शंकरम् ॥ ६० ॥
अज्ञानपाशबद्धत्वादमुक्तः पुरुषः स्मृतः ।
ज्ञानात्तस्य निवृत्तिः स्यात्प्रकाशात्तमसो यथा ॥ ६१ ॥

प्लवा ह्येत इति ॥

"प्लवा ह्येते अदृढा यज्ञरूपा अष्टादशोक्तमवरं येषु कर्म ।
एतच्छ्रेयो येऽभिनन्दन्ति मूढा जरामृत्युं ते पुनरेवापियन्ति"

इति मुण्डकश्रुतिरपवर्गस्य कर्मसाध्यतां प्रतिक्षिपतीत्यर्थः॥५९॥६०॥६१॥

आत्मस्वरूपविज्ञानादज्ञानस्य परिक्षये ।
क्षीणेऽज्ञाने महाप्राज्ञ रागादीनां परिक्षयः ॥ ६२ ॥
रागाद्यसंभवे प्राज्ञ पुण्यपापोपमर्दनम् ।
तयोर्नाशे शरीरेण न पुनः संप्रयुज्यते ॥ ६३ ॥
अशरीरो महानात्मा सुखदुःखैर्न बाध्यते ।
क्लेशमुक्तः प्रसन्नात्मा मुक्त इत्युच्यते बुधैः ॥ ६४ ॥
तस्मादज्ञानमूलानि सर्वदुःखानि देहिनाम् ।
ज्ञानेनैव निवृत्तिः स्यादज्ञानस्य न कर्मभिः ॥ ६५ ॥
नास्ति ज्ञानात्परं किंचित्पवित्रं पापनाशनम् ।
तदभ्यासादृते नास्ति संसारच्छेदकारणम् ॥ ६६ ॥

ज्ञानान्मिथ्याज्ञाननिवृत्तौ तन्निबन्धनरागाद्यभावेन धर्माधर्मप्रवृत्तिविरां तदुभयफलभोगनिमित्तस्य शरीरपरिग्रहस्याभावाद्दुःखात्यन्तनिवृत्तिरपवर्गं भवतीत्याह—आत्मस्वरूपेति । तथा च गौतमसूत्रम्—"दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तरापायादपवर्गः" इति ॥ ६२ ॥ ६३ ॥ ६४ ॥ ६५ ॥ ६६ ॥

सर्वमुक्तं समासेन तव स्नेहान्महामुने ।
गोपनीयं त्वयैवैष वेदान्तार्थो महामुने ॥ ६७ ॥

इति श्रीस्कन्दपुराणे सूतसंहितायां ज्ञानयोगखण्डे प्राणायामविधिनिरूपणं नाम षोडशोऽध्यायः ॥ १६ ॥

गोपनीयमिति । ज्ञानस्यैव हेतुत्वं कर्मणामहेतुत्वं च यद्यपि सकलवेदान्तार्थस्तथाऽपि मूर्खेषु न प्रकाशनीयम् ।

"न बुद्धिभेदं जनयेदज्ञानां कर्मसङ्गिनाम् ।
जोषयेत्सर्वकर्माणि विद्वान्युक्तः समाचरन्" ॥

इति गीतासु भगवतोक्तमित्यर्थः ॥ ६७ ॥

इति श्रीसूतसंहितातात्पर्यदीपिकायां ज्ञानयोगखण्डे प्राणायामविधिनिरूपणं नाम षोडशोऽध्यायः ॥ १६ ॥

---

( अथ सप्तदशोऽध्यायः )

---

ईश्वर उवाच—

अथातः संप्रवक्ष्यामि प्रत्याहारं महामुने ।
इन्द्रियाणां विचरतां विषयेषु स्वभावतः ॥ १ ॥

यतो जितप्राणस्यैवेन्द्रियनियमनहेतुप्रत्याहारसंभवः, अतस्तदनन्तरं स उच्यत इत्याह—अथात इति । लक्षणमाह—इन्द्रियाणामिति । आह पतञ्जलिः—" स्वविषयासंप्रयोगे चित्तस्वरूपानुकार इवेन्द्रियाणां प्रत्याहारः " इति ॥ १ ॥

---

१ ख. ग. 'शीतलत्वे' । २ ख. °रिव इति । ३ ग. 'संयो' ।

बलादाहरणं तेषां प्रत्याहारः स उच्यते ।
यद्यत्पश्यति तत्सर्वं ब्रह्म पश्येत्समाहितः ॥ २ ॥

ज्ञेयप्रपञ्चस्य सर्वस्य ज्ञानादव्यतिरेकानुसंधानमिन्द्रियनियमनादपि प्रशस्तः प्रत्याहार इत्याह—यद्यदिति ।

" ब्रह्मैवेदममृतं पुरस्ताद्ब्रह्म पश्चाद्ब्रह्म दक्षिणतश्चोत्तरेण ।
अधश्चोर्ध्वं च प्रसृतं ब्रह्मैवेदं विश्वमिदं वरिष्ठम् "

इति हि मुण्डकोपनिषत् ॥ २ ॥

प्रत्याहारो भवत्येष ब्रह्मविद्भिः पुरोदितः ।
यदि शुद्धमशुद्धं वा करोत्यामरणान्तिकम् ॥ ३ ॥

सर्वव्यापारजातस्य ब्रह्मणि समर्पणलक्षणमपरं प्रत्याहारमाह—यदि शुद्धमिति ।

" यत्करोषि यदश्नासि यज्जुहोषि ददासि यत् ।
यत्तपस्यसि कौन्तेय तत्कुरुष्व मदर्पणम् ॥
शुभाशुभफलैरेवं मोक्ष्यसे कर्मबन्धनैः "

इति हि गीतासु ॥ ३ ॥

तत्सर्वं ब्रह्मणे कुर्यात्प्रत्याहारोऽयमुच्यते ।
अथवा नित्यकर्माणि ब्रह्माराधनबुद्धितः ॥ ४ ॥

निषिद्धानि वर्जयित्वा नित्यानां काम्यानां च फलानभिसंधानेन भगवदाराधनबुद्ध्याऽनुष्ठानलक्षणमपरं प्रत्याहारमाह—अथवा नित्येति ॥ ४ ॥

काम्यानि च तथा कुर्यात्प्रत्याहारः स उच्यते ।
अथवा वायुमाकृष्य तत्तत्स्थाने निरोधयेत् ॥ ५ ॥

दन्तमूलात्पादाङ्गुष्ठपर्यन्तं प्राणस्यापकर्षणरूपमपरं प्रत्याहारमाह—अथवा वायुमिति । पूर्वस्थानात्परं स्थानं प्रति वायुमाकृष्यैकैकत्र स्थाने यावदखिलोऽपि प्राण आगत्य स्थिरो भवति तावच्चित्तं धारयेत् । अनन्तरमेवं स्थानान्तरं नयेदित्यर्थः ॥ ५ ॥

---

१ घ. प्रसृतं । ङ. सर्वमिदं । २ ङ. ततः । ३ ग. घ. °ष्य स्थानात्स्थानं नि° । ङ. °ष्य स्थानान्तरं नि° । ४ घ. °कस्था° । ५ घ. °रेकैत्र स्था° ।

दन्तमूलात्तथा कण्ठे कण्ठादुरसि मारुतम् ।
उरोदेशात्समाकृष्य नाभिकन्दे निरोधयेत् ॥ ६ ॥
नाभिकन्दात्समाकृष्य कुण्डल्यां तु निरोधयेत् ।
कुण्डलीदेशतो विद्वान्मूलाधारे निरोधयेत् ॥ ७ ॥
तथाऽपाने कटिद्वंद्वे तथोरुद्वयमध्यमे ।
तथा जानुद्वये जङ्घे पादाङ्गुष्ठे निरोधयेत् ॥ ८ ॥

तानि धारणास्थानान्यवरोहेणाऽऽह—दन्तमूलादिति ॥ ६ ॥ ७ ॥ ८ ॥

प्रत्याहारोऽयमित्युक्तः प्रत्याहारपरैः पुरा ।
एवमभ्यासयुक्तस्य पुरुषस्य महात्मनः ॥ ९ ॥

प्रत्याहारोऽयमिति । दन्तमूलमारभ्योक्तस्थानक्रमेण प्राणस्य पादाङ्गुष्ठप्रत्याहरणं प्रत्याहारः ॥ ९ ॥

सर्वपापानि नश्यन्ति भवरोगाश्च सुव्रत ।
अथवा तव वक्ष्यामि प्रत्याहारान्तरं मुने ॥ १० ॥
नाडीभ्यां वायुमाकृष्य निश्चलः स्वस्तिकासनः ।
पूरयेदनिलं विद्वानापादतलमस्तकम् ॥ ११ ॥
पश्चात्पादद्वये तद्वन्मूलाधारे तथैव च ।
नाभिकंदे च हृन्मध्ये कण्ठकूपे च तालुके ॥ १२ ॥
भ्रुवोर्मध्ये ललाटे च तथा मूर्धनि रोधयेत् ।
अकारं च तथोकारं मकारं च तथैव च ॥ १३ ॥
नकारं च मकारं च शिकारं च वकारकम् ।
यकारं च तथोङ्कारं जपेद्बुद्धिमतां वर ॥ १४ ॥

पवनस्य पादद्वयमारभ्याऽऽरोहरूपं प्रत्याहारान्तरमाह—अथवा तवेति । पादद्वयादिस्थाननवके पूर्वपूर्वस्थानजयानन्तरमुत्तरोत्तरस्थानक्रमेणाकारादिवर्णनवकेन सह चित्तस्य धारणमित्यर्थः । एष च पवनधारणरूपः प्रत्याहार आगमे दर्शितः—

१ क. ग. घ. ङ. भावयेत् ।

"चिदात्मैक्यधृतस्य प्राणस्य स्थानसंहृतिः स्थानात् ।
प्रत्याहारो ज्ञेयश्चैतन्ययुतस्य सम्यगनिलस्य " इति ।

धारणास्थानानि । तत्र कानिचिदधिकानि—

"अङ्गुष्ठगुल्फजानुद्वितयानि गुदं च सीवनी मेढ्रम् ।
नाभिर्हृदयं ग्रीवा सलम्बिकाग्रं तथैव नासा च ।
भ्रूमध्यललाटाग्रं सुषुम्नाद्वादशान्तमित्येवम् ॥
उत्क्रान्तौ परकायप्रवेशने चाऽऽगतौ पुनः स्वतनौ ।
स्थानानि धारणायाः प्रोक्तानि महत्तमयोगविधिनिपुणैः"

इति ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥

प्रत्याहारोऽयमित्युक्तः पण्डितैः पण्डितोत्तम ।
अथवा मुनिशार्दूल प्रत्याहारं वदामि ते ॥ १५ ॥

विषयादिभ्यः प्रत्याहृत्य बुद्धेरात्मनि धारणरूपं प्रत्याहारान्तरमाह—अथवा मुनिशार्दूलेति ॥ १५ ॥

देहादावात्ममतिं विद्वान्समाकृष्य समाहितः ।
आत्मनाऽऽत्मनि निर्द्वंद्वे निर्विकल्पे निरोधयेत् ॥ १६ ॥
प्रत्याहारः समाख्यातः साक्षाद्वेदान्तवेदिभिः ।
एवमभ्यसतस्तस्य न किंचिदपि दुर्लभम् ॥ १७ ॥

आत्मना बुद्ध्या ॥ १६ ॥ १७ ॥

तस्य पुण्यं च पापं च नहि सत्यं बृहस्पते ।
अयं ब्रह्मविदां श्रेष्ठः साक्षाद्देवेश्वरः पुमान् ॥ १८ ॥

तस्य पुण्यं चेति । पापवद्भोगकारणं पुण्यमपि संसारावहत्वात् हेयमेव । " तदा विद्वान्पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति " इति मुण्डकश्रुतिः ॥ १८ ॥

प्रत्याहारः समाख्यातः संक्षेपेण महामुने ।
गोपनीयस्त्वया नित्यं गुह्याद्गुह्यतरो ह्ययम् ॥ १९ ॥

इति श्रीस्कन्दपुराणे सूतसंहितायां ज्ञानयोगखण्डे प्रत्याहारविधाननिरूपणं नाम सप्तदशोऽध्यायः ॥ १७ ॥

गुह्यात्पवनप्रत्याहारादपि विमर्शरूपस्य प्रत्याहारस्य विशेषमाह—गोपनीय इति ॥ १९ ॥

इति श्रीसूतसंहितातात्पर्यदीपिकायां ज्ञानयोगखण्डे प्रत्याहारविधाननिरूपणं नाम सप्तदशोऽध्यायः ॥ १७ ॥

( अथाष्टादशोऽध्यायः )

ईश्वर उवाच—

अथातः संप्रवक्ष्यामि धारणाः पञ्च सुव्रत ।
देहमध्यगते व्योम्नि बाह्याकाशं तु धारयेत् ॥ १ ॥
प्राणे बाह्यानिलं तद्वज्ज्वलने चाग्निमौदरे ।
तोयं तोयांशके भूमिं भूमिभागे महामुने ॥ २ ॥
हैयवरलकाराख्यं मन्त्रमुच्चारयेत्क्रमात् ।
धारणैषा मया प्रोक्ता सर्वपापविशोधिनी ॥ ३ ॥

यतः प्रत्याहारेण वशीकृतस्य चित्तस्य धारणासु योग्यता, अतस्तदनन्तरं ता उच्यन्त इति प्रतिजानीते—अथात इति । तत्र शरीरान्तर्वर्तिषु वियदादिषु हैयवरलवर्णैर्भूतबीजैः सह बाह्यविषयादितादात्म्येन बुद्धिर्धारयितव्या । एषा च धारणा सह फलेन श्वेताश्वतरोपनिषदि वर्णिता—

" पृथ्व्यप्तेजोनिलखे समुत्थिते पञ्चात्मके योगगुणे प्रवृत्ते ।
न तस्य रोगो न जरा न मृत्युः प्राप्तस्य योगाग्निमयं शरीरम् "

इति ॥ १ ॥ २ ॥ ३ ॥

जान्वन्तः पृथिवीभागो ह्यपां पाय्वन्त उच्यते ।
हृदयान्तस्तथाऽग्न्यंशो भ्रूमध्यान्तोऽनिलांशकः ॥४॥
आकाशान्तस्तथा प्राज्ञ मूर्धान्तः परिकीर्तितः ।
ब्रह्माणं पृथिवीभागे विष्णुं तोयांशके तथा ॥ ५ ॥

१ ख. हयरल° । २ ग. °शोधिनी ॥ ३ ॥ ३ ख. हयरल° । ४ ख. °वियदादि° । ५ ख. ङ. °न्ताङोऽनि° ।

उक्तानां वियदादीनां शरीरे धारणावस्थानविशेषात्सह तत्तद्देवताभिराह—जान्वन्त इति ॥ ४ ॥ ५ ॥

अग्न्यंशे च महेशानमीश्वरं चानिलांशके ।
आकाशांशे महाप्राज्ञ धारयेत्तु सदाशिवम् ॥ ६ ॥

महेशानं रुद्रं पञ्चधा विभक्तेषु पादादिषु शरीरप्रदेशेषु पृथिव्यादिपञ्चभूतात्मकतां तेषु च ब्रह्मविष्णुरुद्रेश्वरसदाशिवरूपतां च सदा भावयेदित्यर्थः ॥ ६ ॥

अथवा तव वक्ष्यामि धारणां मुनिपुंगव ।
मनसीन्दुं दिशः श्रोत्रे क्रान्ते विष्णुं बले हरिम् ॥ ७ ॥

अथवा तवेति । मनःप्रभृत्याध्यात्मिकशरीरभागेषु चन्द्रादीन्याधिदैविकरूपाणि तादात्म्येन भावयेत् । क्रान्ते क्रमणेनोपलक्षिते पादे । हरिमिन्द्रम् ॥ ७ ॥

वाच्यग्निं मित्रमुत्सर्गे तथोपस्थे प्रजापतिम् ।
स्पर्शे वायुं तथा नेत्रे सूर्यमूर्तिं तथैव च ॥ ८ ॥

उत्सृजत्यनेनेत्युत्सर्गोऽपानं तत्र ॥ ८ ॥

जिह्वायां वरुणं घ्राणे भूमिदेवीं तथैव च ।
पुरुषे सर्वशास्तारं बोधानन्दमयं शिवम् ॥ ९ ॥
धारयेद्बुद्धिमान्नित्यं सर्वपापविशुद्धये ।
एषा च धारणा प्रोक्ता योगशास्त्रार्थवेदिभिः ॥ १० ॥

पुरुषे जीवे । सर्वशास्तारं परमात्मानम् । "अन्तः प्रविष्टः शास्ता जनानां सर्वात्मा" इति श्रुतेः ॥ ९ ॥ १० ॥

ब्रह्मादिकार्यरूपाणि स्वे स्वे संहृत्य कारणे ।
सर्वकारणमव्यक्तमनिरूप्यमचेतनम् ॥ ११ ॥
साक्षादात्मनि संपूर्णे धारयेत्प्रयतो नरः ।
धारणैषा परा प्रोक्ता धार्मिकैर्वेदपारगैः ॥ १२ ॥

धारणान्तरमाह—ब्रह्मादीति । ब्रह्मादीनामपि विग्रहाः स्वस्वकारणपरम्परया मायायां लीयन्ते । माया च परमात्मनि । ब्रह्मादयस्तु परमात्मरूपेणैव न्यग्राति-

१ क. "चा ध्रुवा" । २ क. ख. ग. "र्गवि" ।

ष्टन्त इति भावयेदित्यर्थः। अव्यक्तमनभिव्यक्तम्। नामरूपानिरूप्यमनिर्वचनीयम्। अचेतनं जडम्॥ ११॥ १२॥

इन्द्रियाणि समाहृत्य मनसाऽऽत्मनि धारयेत्।
कंचित्कालं महाप्राज्ञ धारणैषा च पूजिता॥ १३॥

धारणान्तरमाह—इन्द्रियाणीति। मनसैव विषयेभ्य इन्द्रियाणि व्याहृत्य मन आत्मनि धारयेदित्यर्थः। इयं च कठवल्लीषु सविशेषं दर्शिता—

"यच्छेद्वाङ्मनसी प्राज्ञस्तद्यच्छेज्ज्ञान आत्मनि।
ज्ञानमात्मनि महति नियच्छेत्तद्यच्छेच्छान्त आत्मनि" इति॥ १३॥

वेदादेवं सदा देवा वेदादेव सदा नराः।
वेदादेव सदा लोका वेदादेव महेश्वरः॥ १४॥

वेदादेवेति। देवादयः सर्वे वेदशब्देभ्य एव सृष्टाः। "एते असृग्रमिन्दवस्तिरःपवित्रमाशवः" इति। अत्र मन्त्र एत इति वै प्रजापतिर्देवानसृजत। असृग्रमिति मनुष्यान्। इन्दव इति पितॄन्। तिरःपवित्रमित्यन्याः प्रजा इति श्रुतेः।

"ऋषीणां नामधेयानि कर्माणि च पृथक्पृथक्॥
वेदशब्देभ्य एवाऽऽदौ निर्ममे स महेश्वरः"

इति स्मृतावपि ऋषिपदस्य सर्वसृष्टव्योपलक्षणार्थत्वात्। महेश्वरोऽपि वेदादेव ज्ञातव्यः "नावेदविन्मनुते तं बृहन्तं सर्वानुभवमात्मानं संपराये" इति॥१४॥

इति चित्तव्यवस्था या धारणा सा प्रकीर्तिता।
ब्रह्मैवाहं सदा नाहं देवो यक्षोऽथवा नरः॥ १५॥
न देहेन्द्रियबुद्ध्यादिर्न माया नान्यदेवता।
इति बुद्धिव्यवस्थाऽपि धारणा सैव हि श्रुतिः॥ १६॥
सर्वं संक्षेपतः प्रोक्तं सर्वशास्त्रविशारद।
आगमान्तैकसंसिद्धमास्थेयं भवता सदा॥ १७॥

इति श्रीस्कन्दपुराणे सूतसंहितायां ज्ञानयोगखण्डे धारणाविधिनिरूपणं नामाष्टादशोऽध्यायः॥ १८॥

१ प. °न महादेव वे°। २ क. ग. °नुभुग°। ३ ख. देहेन्द्रियमतिबुद्धिर्न। ४ प. °णा सैव हि।

ब्रह्मैवाहमिति । "अयमात्मा ब्रह्म" इति श्रुतावात्मनः परमात्मतादात्म्याभिधानेनैव तद्भिन्नसमस्तवस्त्वात्मकत्वावगमादित्यर्थः ॥ १५ ॥ १६ ॥ १७ ॥

इति श्रीसूतसंहितातात्पर्यदीपिकायां ज्ञानयोगखण्डे धारणाविधिनिरूपणं नामाष्टादशोऽध्यायः ॥ १८ ॥

---

( अथैकोनविंशोऽध्यायः )

---

ईश्वर उवाच—

अथातः संप्रवक्ष्यामि ध्यानं संसारनाशनम् ।
आकाशे निर्मलं शुद्धं भासमानं सुशीतलम् ॥ १ ॥
सोममण्डलमापूर्णमचलं दृष्टिगोचरम् ।
ध्यात्वा मध्ये महादेवं परमानन्दविग्रहम् ॥ २ ॥
उमार्धदेहं वरदमुत्पत्तिस्थितिवर्जितम् ।
शुद्धस्फटिकसंकाशं चन्द्ररेखावतंसकम् ॥ ३ ॥
त्रिलोचनं चतुर्बाहुं नीलग्रीवं परात्परम् ।
ध्यायेन्नित्यं सदा सोऽहमिति ब्रह्मविदां वर ॥ ४ ॥

यतो धारणाभ्यासेन परित्यक्तचापल्यस्य मनसो ध्यानयोग्यता, अतस्तदनन्तरं तदुच्यत इत्याह—अथात इति । तच्च सगुणनिर्गुणलक्षणविषयभेदेन द्विविधम् । तत्र सगुणध्यानमाह—आकाश इत्यादि । आकाशे वर्तमानमुक्तलक्षणं सकललोकदृष्टिगोचरे चन्द्रमण्डले प्रथमतो ध्यात्वा तन्मध्ये "विज्ञानमानन्दं ब्रह्म" इति श्रुत्युक्तं सच्चिदानन्दैकरसं परमेव ब्रह्मोमासहायत्वादियथोक्तलक्षणं स्वीकृतलीलावतारं शिवमात्मत्वेन ध्यायेदित्यर्थः । तथा च वाजसनेयके—बालाकिअजातशत्रुसंवादे—"य एवासौ चन्द्रे पुरुष एतमेवाहं ब्रह्मोपासे" इति बालाकिनोक्ते नैतच्चिन्मात्रस्वरूपं किं तु स्वीकृतलीलावतारं सकलमिदं रूपमित्यभिप्रायवताऽजातशत्रुणोक्तम्—"मा मैतस्मिन्संवदिष्ठा बृहन्पाण्डरवासाः सोमो राजेति वा अहमेतमुपास" इति ॥ १ ॥ २ ॥ ३ ॥ ४ ॥

---

१ ङ. °तरवासा° । २ ग. °वान्ने "इ° ।

अथवाऽऽकाशमध्यस्थे भ्राजमाने सुशोभने ।
आदित्यमण्डले पूर्णे लक्षयोजनविस्तृते ॥ ५ ॥

चन्द्रमण्डलवदादित्यमण्डलमप्याकाशे ध्यात्वा तत्र स्वीकृतदिव्यावतारं पराशिवमेवं ध्यायेदित्याह—अथवाऽऽकाशेति ॥ ५ ॥

सर्वलोकविधातारमीश्वरं हेमरूपिणम् ।
हिरण्मयं श्मश्रुकेशं हिरण्मयनखं तथा ॥ ६ ॥

हेमरूपिणमिति । उद्गीथविद्यायामादित्यस्थस्य पुरुषस्य कतिचिदिहोक्ता हेमरूपत्वादिगुणाः श्रूयन्ते—"य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते । हिरण्यश्मश्रुर्हिरण्यकेश आ प्रणखात्सर्व एव सुवर्णस्तस्य यथा कप्यासं पुण्डरीकमेवमक्षिणि" इति ॥ ६ ॥

कप्यास्यासनवद्वक्त्रं नीलग्रीवं विलोहितम् ।
आगोपालप्रसिद्धं तमम्बिकार्धशरीरिणम् ॥ ७ ॥

कप्यास्यासनवदिति । कपीनां हि केषांचिदास्यमासनं च रक्तवर्णं तथा रक्तवर्णं मुखमित्यर्थः । आगोपालमिति । श्रूयते हि रुद्राध्याये—

"उतैनं गोपा अदृश्रन्नदृश्रन्नुदहार्यः ।
उतैनं विश्वा भूतानि स दृष्टो मृडयाति नः " इति ॥ ७ ॥

सोऽहमित्यनिशं ध्यायेत्संध्याकालेषु वा नरः ।
अथवा वैदिके शुद्धेऽप्यग्निहोत्रादिमध्यगे ॥ ८ ॥
आत्मानं जगदाधारमानन्दानुभवं सदा ।
गङ्गाधरं विरूपाक्षं विश्वरूपं वृषध्वजम् ॥ ९ ॥
चतुर्भुजं समासीनं चन्द्रमौलिं कपर्दिनम् ।
रुद्राक्षमालाभरणमुमायाः पतिमीश्वरम् ॥ १० ॥
गोक्षीरधवलाकारं गुह्याद्गुह्यतरं सदा ।
अत्यद्भुतमनिर्द्वंद्वमहंबुद्ध्या विचिन्तयेत् ॥ ११ ॥

---

१ क. ग. आ प्रनखा° । घ. आ नखा° । २ ङ. °र्वद्वक नी° ।

उक्तलक्षणे परशिवमसौ वा स्वीकृतवक्ष्यमाणदिव्यावतारं ध्यायेदित्याह—अथवा वैदिक इति । परब्रह्म सगुणमप्यनुपास्यत्वेनोक्तं हि बालाकिनैव—"य एवायमसौ पुरुष एतमेवाहं ब्रह्मोपासे" इति । उक्ताश्चन्द्रादित्यादयः शिवमूर्तित्वेनाऽऽगमेष्वपि प्रसिद्धाः—

" क्ष्मावह्नियजमानार्कजलवातेन्दुखानि च ॥
कीर्तिता मूर्तयो ह्यष्टौ " इति ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥

अथवाऽहं हरिः साक्षात्सर्वज्ञः पुरुषोत्तमः ।
सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात् ॥ १२ ॥

आदित्यमूर्तिवद्विष्णुमूर्तावपि परशिवस्य वक्ष्यमाणलीलावतारस्य स्वात्मसात्म्येन ध्यानमाह—अथवेति । तत्र प्रथमतो विष्णुमूर्तेरपि स्वात्मतादात्म्यानुसंधानमाह—अहं हरिरिति । सहस्रशीर्षा ब्रह्मादिपिपीलिकान्तसर्वप्राणिषु वर्तमानानि सहस्राण्यनन्तानि शीर्षाणि शिरांसि यस्येति स तथोक्तः । पुरुषः पूर्णः । सहस्राक्षः सहस्राण्यनन्तानि प्रजासंबन्धीन्यक्षीणीन्द्रियाणीति सहस्राक्षः । एवं सहस्रपादिति ॥ १२ ॥

विश्वो नारायणो देवः अक्षरः परमः प्रभुः ।
इति ध्यात्वा पुनस्तस्य हृदयाम्भोजमध्यमे ॥ १३ ॥

विश्वो विश्वत्वेन स्थितः । नारायणः 'नृ नये' पचाद्यच् । नरो नेता सर्वस्य स्वामी । तस्यापत्यानि नाराः सर्वे चेतना अचेतनाश्च । अपत्येऽण् । तेषामयनमधिष्ठानत्वेनाऽऽश्रयभूतं जलचन्द्राणां बिम्बचन्द्रवत्कलधौतादीनां शुक्तिरजतादिवदिति । नारायणः पूर्वपदात्संज्ञायामिति णत्वम् । देवो देवनशीलः । अक्षरो न क्षरतीति सर्वमश्नुत इति वाऽक्षरः । अशेः सरमत्ययेऽक्षरम् । परमः सर्वोत्कृष्टः । यद्वाऽक्षरः परमः परमाक्षरः परमव्यापको व्यापकानामपि व्यापकः । प्रभुः सर्वेषां प्रकर्षेण भरणक्षमः । तदात्मकस्य स्वात्मनो हृदयाम्भोजमध्ये " पद्मकोशप्रतीकाशं हृदयं चाप्यधोमुखम् " इतिश्रुत्युक्ते ॥ १३ ॥

प्राणायामैर्विकसिते परमेश्वरमन्दिरे ।
अष्टैश्वर्यदलोपेते विद्याकेसरसंयुते ॥ १४ ॥

रेचकप्राणायामेन विकासीकृत्य, ऊर्ध्वमुखीकृतपरमेश्वरमन्दिरे । तत्र हि परमे-

१ ख. °न्यक्षाणी° । २ क. ग. ध. °प्यण् । ३ घ. °काद्या हरिकाधमे° । ४ क. ख. °वि चार° ।

श्वरो ध्यातव्यत्वेन वक्ष्यते । अणिमादीन्यष्टैश्वर्याणि दलानि तैरुपेते तत्त्वविद्यारूपैः केसरैर्युते ॥ १४ ॥

ज्ञाननालमहत्कन्दे प्रणवेन प्रबोधिते ।
विश्वार्चिषं महावह्निं ज्वलन्तं विश्वतोमुखम् ॥ १५ ॥

शास्त्रविषयं ज्ञानं नालं यस्य तस्मिन्महत्तत्त्वमेव कन्दो यस्य तस्मिन्प्रणवेन प्रबोधिते प्रागुक्तविकासे प्रणवदिवाकरस्य कारणतोच्यते । उक्तहृदयकमलमध्यगतसुषुम्नायामन्तर्वक्ष्यमाणवह्निशिखायाः कारणभूतं मूलाधारस्थं वैश्वानरमाह—विश्वार्चिषमिति । विश्वार्चिषं सर्वतःप्रसरज्ज्वालम् । विश्वतोमुखं विश्वावकाशोदीर्णमुखसामर्थ्यम् ॥ १५ ॥

वैश्वानरं जगद्योनिं शिखातन्विनमीश्वरम् ।
तापयन्तं स्वकं देहमापादतलमस्तकम् ॥ १६ ॥
निर्वातदीपवत्तस्मिन्दीपितं हव्यवाहनम् ।
नीलतोयदमध्यस्थं विद्युल्लेखेव भास्वरम् ॥ १७ ॥

जगद्योनिम् । यद्वि जगदुपादानं परमात्मज्योतिस्तत्प्रतीकत्वेन तदात्मकमिदं मूलाधारस्थं ज्योतिस्तेन जगद्योनिरित्युच्यते । तत्प्रतीकत्वं च श्रूयते छान्दोग्ये—" अथ यदतः परो दिवो ज्योतिर्दीप्यते " इत्यारभ्य " इदं वाव तद्यदिदमन्तः पुरुषे ज्योतिः " इति । शिखां तनोतीति शिखातन्विनम् । औणादिको विनिप्रत्ययः । तापयन्तमिति । श्रूयते च तैत्तिरीयोपनिषदि—
" संतापयति स्वं देहमापादतलमस्तकम् " इति ॥ १६ ॥ १७ ॥

नीवारशुकवद्रूपं पीताभासं विचिन्तयेत् ।
तस्य वह्नेः शिखायां तु मध्ये परमकारणम् ॥ १८ ॥
परमात्मानमानन्दं परमाकाशमीश्वरम् ।
ऋतं सत्यं परं ब्रह्म साम्बं संसारभेषजम् ॥ १९ ॥
ऊर्ध्वरेतं विरूपाक्षं विश्वरूपं महेश्वरम् ।
नीलग्रीवं स्वमात्मानं पश्यन्तं पापनाशनम् ॥ २० ॥

तस्य वह्नेरिति । श्रूयते च—'तस्याः शिखाया मध्ये तु परमात्मा व्यवस्थितः ' इति ॥ १८ ॥ १९ ॥ २० ॥

---

१ म. °न्वशीर्षं° । २ क ग. °शिनकी° । ३ क. ग. ङ °निनम । ४ ग वह्निं° ।

ब्रह्मविष्णुमहेशानैर्ध्येयं ध्येयविवर्जितम् ।
सोऽहमित्यादरेणैव ध्यायेद्योगी महेश्वरम् ॥ २१ ॥

स्वयं ब्रह्मादिभिर्ध्येयं स्वात्मना ध्यातव्येनान्येन वर्जितम् ॥ २१ ॥

अयं मुक्तेर्महामार्ग आगमान्तैकसंस्थितः ।
अथवाऽहं मुनिश्रेष्ठ ब्रह्मा लोकपितामहः ॥ २२ ॥
इति स्मृत्वा स्वहृन्मध्ये शिवं परमकारणम् ।
साक्षाद्वेदान्तसंवेद्यं साम्बं संसारभेषजम् ॥ २३ ॥

ध्यानस्य मोक्षहेतुत्वे श्रुतिः प्रमाणमित्याह—आगमान्तेति । "ओमित्येवं ध्यायथ आत्मानं स्वस्ति वः पाराय तमसः परस्तात्" इति श्रूयते । विष्णुमूर्तिरिव स्वयं ब्रह्ममूर्तिर्भूत्वा स्वहृदये शिवं ध्यायेदित्याह—अथवाऽहमिति ॥ २२ ॥ २३ ॥

अहंबुद्ध्या विमुक्त्यर्थं ध्यायेदीशानमव्ययम् ।
अथवा सत्यमीशानं ज्ञानमानन्दमद्वयम् ॥ २४ ॥
अनन्तममलं नित्यमादिमध्यान्तवर्जितम् ।
तथाऽस्थूलमनाकाशमसंस्पृश्यमचक्षुषम् ॥ २५ ॥

सर्वाधारत्वजगत्कारणत्वादिविशिष्टवाचकस्य स इति पदस्य बुद्ध्यादिविशिष्टप्रत्यक्चैतन्यवाचकस्याहंपदस्य च सामानाधिकरण्ये सत्यखण्डैकरसे लक्ष्ये यत्र वाक्यार्थे पर्यवसानमतः सोऽहमिति महावाक्येनानुसंदध्यादिति । निष्कलविषयं ध्यानमाह—अथवा सत्यमिति ॥ २४ ॥ २५ ॥

न रसं न च गन्धाख्यमप्रमेयमनूपमम् ।
सर्वाधारं जगद्रूपममूर्तं मूर्तमव्ययम् ॥ २६ ॥

तत्राहंपदवाच्यस्य बुद्ध्यादिविशिष्टप्रत्यक्चैतन्यस्य सकललोकप्रत्यक्षत्वेऽपि स इत्येतत्पदवाच्यस्य परोक्षत्वेनाप्रसिद्धत्वात्सर्वाधारमित्यादिना पदजातेन तन्निर्देशः । ततः प्राक्तनेन च सत्यमित्यादिना लक्ष्यस्याखण्डैकरसप्रदर्शनं सोऽहमिति च लक्षणाबीजस्य सामानाधिकरण्यनिर्देश इति विभागः । तत्राद-

१ ध. "वेदान्त श्रा" ।

यमस्थूलमनाकाशमित्यादयो द्वैतादिनिषेधमुखेन लक्ष्ये पर्यवस्यन्ति । सत्यादयस्तु स्वार्थार्पणप्रणाड्येति विशेषः । तदुक्तमाचार्यैः—

"तत्रानन्तोऽन्तवद्वस्तुव्यावृत्त्यैव विशेषणम् ।
स्वार्थार्पणप्रणाड्या तु परिशिष्टे विशेषणम्" इति ।

वाजसनेयश्रुतिरप्येवव्यावृत्तिमुखेनैवैतदेव लक्ष्यं निर्दिशति "एतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्त्यस्थूलमनण्वह्रस्वमदीर्घमलोहितमस्नेहमच्छायमतमोऽवाय्वनाकाशमसङ्गमस्पर्शमगन्धमरसमचक्षुष्कमश्रोत्रम्" इत्यादि । प्रकृत्याऽमूर्तमपि मायया मूर्तम् ॥ २६ ॥

अदृश्यं दृश्यमन्तस्थं बहिष्ठं सर्वतोमुखम् ।
सर्वतःपाणिपादं च सर्वकारणकारणम् ॥ २७ ॥
सर्वज्ञानादिसंयुक्तमहमित्येव चिन्तयेत् ।
अयं पन्था मुनिश्रेष्ठ साक्षात्संसारनाशने ॥ २८ ॥

एवमदृश्यं दृश्यमप्ययं तत्त्वावबोधपर्यन्तमनिवृत्तोपाधिकम् । अन्तस्थमिति ।

"अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः" इति हि श्रुतिः ॥ २७ ॥ ॥ २८ ॥

अथवा सच्चिदानन्दमनन्तं ब्रह्म सुव्रत ।
अहमस्मीत्यभिध्यायेद्ध्येयातीतं विमुक्तये ॥ २९ ॥

उक्ते वाच्यार्थपूर्वकलक्ष्यानुसंधानेक्षणे सति वाच्यानुसंधानमपि त्यक्त्वा लक्ष्य एवार्थोऽनुसंधेय इत्याह—अथवा सच्चिदिति । सच्चिदानन्दादयः शब्दा लक्षणयाऽखण्डैकरसमेव स्वरूपं समर्थयन्ति ॥ २९ ॥

इदंतया न देवेशमभिध्यायेन्मनागपि ।
ब्रह्मणः साक्षिरूपत्वान्नेदं यदिति हि श्रुतिः ॥३०॥
एवं ध्यानपरः साक्षाच्छिव एव न चान्यथा ।
अनेन सदृशो लोके न हि वेदविदां वर ॥ ३१ ॥
प्रक्षीणाशेषपापस्य ज्ञाने ध्याने भवेन्मतिः ।
पापोपहतबुद्धीनां तद्वार्ताऽपि सुदुर्लभा ॥ ३२ ॥

---

१ प. °रिप्ये वि° । २ क. ख. ङ. °प्येत° । ३ ख. निर्दिशति । ४ ग. प. सुर्लभ्यमि ।

मेत्यस्ताद्रात्म्येनैवानुसंधाननियमे कारणमाह—दृढंतयेति। नेदं यदिति हि श्रुतिरिति।

"यच्चक्षुषा न पश्यति येन चक्षूंषि पश्यति।
तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते॥"

इति तलवकारोपनिषत्परत्वेन ब्रह्मणोऽनुसंधानं सत्याचष्ट इत्यर्थः॥३०॥ ॥ ३१ ॥ ३२ ॥

अथवा विष्णुमव्यक्तमाधारं देवनायकम्।
शङ्खचक्रधरं देवं पद्महस्तं सुलोचनम्॥ ३३ ॥
किरीटकेयूरधरं पीताम्बरधरं हरिम्।
श्रीवत्सवक्षसं विष्णुं पूर्णचन्द्रनिभाननम्॥ ३४ ॥
पद्मपुष्पदलाभोष्ठं सुनसलं शुचिस्मितम्।
शुद्धस्फटिकसंकाशमहमित्येव चिन्तयेत्॥ ३५ ॥
एतच्च दुर्लभं प्रोक्तं योगशास्त्रविशारदैः।
अथवा देवदेवेशं ब्रह्माणं परमेष्ठिनम्॥ ३६ ॥
अक्षमालाधरं देवं कमण्डलुकराम्बुजम्।
वरदाभयहस्तं च वाग्देव्या सहितं सदा॥ ३७ ॥
कुन्देन्दुसदृशाकारमहमित्येव चिन्तयेत्।
अथवाऽग्निं तथाऽऽदित्यं चन्द्रं वा देवतान्तरम्॥ ३८॥

सकलनिष्कलात्मकस्य शिवस्य ताद्रात्म्यानुध्यानान्युक्त्वा विष्ण्वादीनामपि सकलध्यानान्याह—अथवा विष्णुमित्यादि। निष्कलं तु विशेषाभावात्तदेव भविष्यतीति न पृथगुक्तम्॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८॥

वेदोक्तेनैव मार्गेण सदाऽहमिति चिन्तयेत्।
एवमभ्यासयुक्तस्य पुरुषस्य महात्मनः॥ ३९ ॥
क्रमाद्वेदान्तविज्ञानं विजायेत न संशयः।
ज्ञानादज्ञानविच्छित्तिः सैव तस्य विमुक्तता॥ ४० ॥

१ ङ. °कस्मात्प्रे°। २ ङ. °पश्यन्ति। ३ ञ. °तुसंधा°। ४ ङ. विमुक्तता।

सर्वमुक्तं समासेन मया वेदान्तसंग्रहम् ।
मत्प्रसादाद्विजानीहि मा शङ्किष्ठाः कदाचन ॥ ४१ ॥
इति श्रीस्कन्दपुराणे सूतसंहितायां ज्ञानयोगखण्डे
ध्यानविधिनिरूपणं नामैकोनविंशोऽध्यायः ॥ १९ ॥

अत्र सगुणध्यानानि चित्तैकाग्र्यद्वारा पापक्षयद्वारा वा निष्कलसाक्षात्कारे कारणम् । निष्कलं ध्यानं त्वव्यवधानेनेत्याह—एवमभ्यासेति ॥ ३९ ॥ ४० ॥ ॥ ४१ ॥

इति श्रीसूतसंहितातात्पर्यदीपिकायां ज्ञानयोगखण्डे ध्यानविधिनिरूपणं नामैकोनविंशोऽध्यायः ॥ १९ ॥

---

( अथ विंशोऽध्यायः )

---

ईश्वर उवाच—

अथातः संप्रवक्ष्यामि समाधिं भवनाशनम् ।
समाधिः संविदुत्पत्तिः परजीवैक्यतामतिः ॥ १ ॥

यतः साधनभूतध्यानस्वरूपज्ञानार्थैता तत्फलसंविदः समाधिपर्यायाया उत्पत्तिः । अतस्तदनन्तरं तदभिधानमिति प्रतिजानीते—अथात इति । महावाक्यलक्ष्यस्वरूपसाक्षात्कार एव समाधिरिह विवक्षित इत्यर्थः ॥ १ ॥

यदि जीवः पराद्भिन्नः कार्यतामेति सुव्रत ।
अचित्त्वं च प्रसज्येत घटवत्पण्डितोत्तम ॥ २ ॥
विनाशित्वं भयं च स्याद्द्वितीयाद्वा इति श्रुतिः ।
नित्यः सर्वगतो ह्यात्मा कूटस्थो दोषवर्जितः ॥ ३ ॥

ध्यानफलभूततत्त्वविमर्शस्वरूपफलमाह—यदि जीव इति । "कस्मोद्ध्वभेष्यद्द्वितीयाद्वै भयं भवति" इति वाजसनेयश्रुतिरित्यर्थः ॥ २ ॥ ३ ॥

एकः स भिद्यते भ्रान्त्या मायया न स्वरूपतः ।
तस्मादद्वैतमेवास्ति न प्रपञ्चो न संसृतिः ॥ ४ ॥

---

१ क. ख. °वैरना° । २ ड. °य तवत्क° । ३ क. °पान्नत्व° । ४ घ. °तत्र° । ५ ग. °स्वाद्यमे° ।

यथाऽऽकाशो घटाकाशो महाकाश इतीरितः ॥
तथा भ्रान्तैर्द्विधा प्रोक्तो ह्यात्मा जीवेश्वरात्मना ॥ ५ ॥

स भिद्यत इति । माययाऽज्ञानेन जनिता या भ्रान्तिर्विपरीतज्ञानं तया भेदो गृह्यते । प्रमेयभेदग्रहणस्य " नेह नानाऽस्ति " इति श्रुतिबाधितत्वेन भ्रान्तित्वादित्यर्थः ॥ ४ ॥ ५ ॥

नाहं देहो न च प्राणो नेन्द्रियाणि तथैव च ॥
न मानोऽहं न बुद्धिश्च नैव चित्तमहंकृतिः ॥ ६ ॥

अविद्ययाऽऽत्मतादात्म्येनाध्यस्तस्य देहेन्द्रियमनःप्राणादेर्विमर्शजनितेन विवेकज्ञानेन निरासप्रभिनेपेन दर्शयति—नाहं देह इति ॥ ६ ॥

नाहं पृथ्वी न सलिलं न च वह्निर्न चानिलः ॥
न चाऽऽकाशो न शब्दश्च न च स्पर्शस्तथा रसः ॥७॥
नाहं गन्धो न रूपं च न मायाऽहं न संसृतिः ॥
सदा साक्षिस्वरूपत्वाच्छिव एवास्मि केवलः ॥ ८ ॥

यथा भूतकार्यस्य देहादेर्विवेक एवं तत्कारणस्य पृथिव्यादिभूतजातस्य चेत्याह—नाहं पृथ्वीति ॥ ७ ॥ ८ ॥

इति धीर्या मुनिश्रेष्ठ सा समाधिरिहोच्यते ॥
अथवा पञ्चभूतेभ्यो जातमण्डं महामुने ॥ ९ ॥
भूतमात्रतया दग्ध्वा विवेकेनैव वह्निना ॥
पुनः स्थूलादिभूतानि सूक्ष्मभूतात्मना तथा ॥ १० ॥

सकारणाद्भूतभौतिकप्रपञ्चादात्मानं बुद्ध्यैव विविक्ते तस्मिन्समाधिरुक्तः । अधुना तं प्रपञ्चं बुद्ध्यैव प्रविलाप्य परिशिष्टे तस्मिन्नद्वितीये समाधिमाह—अथवा पञ्चेति । " तदनन्यत्वमारम्भणशब्दादिभ्यः " इति न्यायेन भौतिकं ब्रह्माण्डं पञ्चीकृतभूतात्मना तानि च भूतान्यपञ्चीकृतभूतात्मना ॥ ९ ॥ १० ॥

विलाप्यैवं विवेकेन ततस्तान्यपि बुद्धिमान् ॥
मायामात्रतया दग्ध्वा मायां च प्रत्यगात्मना ॥ ११ ॥

---

१ प. ८. °स्त्रे° । २ प. °वक्तेन । ३ प. विलाप्यैवं ।

सोऽहं ब्रह्म न संसारी न मत्तोऽन्यत्कदाचन ॥
इति विद्यात्स्वमात्मानं स समाधिः प्रकीर्तितः ॥ १२ ॥

तान्यपीति[1]। " पर्यायेणानुक्रमोऽत उपपद्यते च " इति न्यायेन पृथिव्यादिक्रमेण मायायां तामप्यात्मनि बुद्ध्यैव प्रविलाप्य परिशिष्टेऽद्वितीये केवलमात्मनि स्वात्मतादात्म्येनानुसंधानं समाधिरित्यर्थः ॥ ११ ॥ १२ ॥

अथवा योगिनां श्रेष्ठ प्रणवात्मानमीश्वरम् ॥
वर्णत्रयात्मना विद्यादकारादिक्रमेण तु ॥ १३ ॥

वाच्यैर्वाचकप्रपञ्चस्य ब्रह्मणि परिकल्पितत्वात्प्रणववाच्यस्थूलसूक्ष्मप्रपञ्चस्य सकारणस्योपसंहारद्वारा निष्कलब्रह्मणि समाधिमभिधाय वाचकप्रणवावयवानामकारोकारमकारार्धमात्रारूपाणां सकारणानां प्रविलापनं ब्रह्मणि समाधिमिदानीमाह—अथवा योगिनामिति ।

" प्रणवो ह्यपरं ब्रह्म प्रणवश्च परं स्मृतम् ।
एवं हि प्रणवं ज्ञात्वा व्यश्नुते तदनन्तरम् " इति श्रुतम् ॥१३॥

ऋग्वेदोऽयमकाराख्य उकारो यजुरुच्यते ॥
मकारः सामवेदाख्यो नादस्त्वाथर्वणी श्रुतिः ॥ १४ ॥

अकारोकारमकारनादानां वेदचतुष्टयात्मकत्वमाह—ऋग्वेद इति ॥ १४ ॥

अकारो भगवान्ब्रह्मा तथोकारो हरिः स्वयम् ।
मकारो भगवान्रुद्रस्तथा नादस्तु कारणम् ॥ १५ ॥

तेषामेव ब्रह्मविष्णुरुद्रतत्कारणात्मकतामाह—अकार इति ॥ १५ ॥

" अग्नयश्च तथा लोका अवस्थावसथास्त्रयः ।
उदात्तादिस्वराः कालाश्चैते वर्णत्रयात्मकाः ॥ १६ ॥

तेषामेव गार्हपत्यदक्षिणाहवनीयसंवर्तकाग्निरूपात्मकत्वमाह—अग्नय इति । लोका इति । पृथिव्यन्तरिक्षद्युसोमलोकात्मकत्वं दर्शयति । अवस्था इति । जाग्रत्स्वप्नसुषुप्ततुरीयात्मकतामाह । आवसथा इति । नाभिहृदयकण्ठमूर्धात्मकतामाह । त्रय इति संवर्तकादीनां चतुर्थानामप्युपलक्षणम् । उदात्तादीति,

[1] १ ग. घ. °नि । विपर्ययेण तु क्रा । ङ. °ति । विपर्ययेणानुक्रमो मोप° । २ ङ. °त्मका वि° । ३ क. ख. घ. °श्रय° । ४ घ °स्व-प्रागत्य° । ५ ङ. °न्तरेव च । म° । ६ क. °रूपक° । ७ क. °तुर्यात्म° ।

उदात्तानुदात्तस्वरितैकश्रुत्यात्मकतामाह । काला इति भूतभविष्यद्वर्तमानसाधारणकालतामाह । वर्णत्रयेति नादस्याप्युपलक्षणम् । ऋग्वेदाद्यात्मकता चाकारादीनां श्रूयते—" तस्य ह वै प्रणवस्य या पूर्वा मात्रा पृथिव्यकारः स ऋग्भिर्ऋग्वेदो ब्रह्मा वसवो गायत्री गार्हपत्यः । द्वितीयाऽन्तरिक्षं स उकारः स यजुर्भिर्यजुर्वेदो विष्णू रुद्रास्त्रिष्टुब्दक्षिणाग्निः । तृतीया द्यौः स मकारः स सामभिः सामवेदो रुद्र आदित्या जगत्याहवनीयो याऽवसानेऽस्य चतुर्थ्यर्धमात्रा सा सोमलोक ॐकारः साऽऽथर्वणैर्मन्त्रैरथर्ववेदः संवर्तकोऽग्निर्मरुतो विराडेकऋषिः " इति । तथा—"जागरिते ब्रह्मा स्वप्ने विष्णुः सुषुप्तौ रुद्रस्तुरीयमक्षरम् " इति च । तथाऽन्यत्र—नाभिर्हृदयं कण्ठो मूर्धा चेति ॥ १६ ॥

इति ज्ञात्वा पुनः सर्वमक्षरत्रयभावतः ।
विलाप्याकारमर्द्धस्थमुकाराख्ये विलापयेत् ॥ १७ ॥
उकारं च मकाराख्ये महानादे मकारकम् ।
तथा मायात्मना नादं मायां जीवात्मरूपतः ॥ १८ ॥
जीवमीश्वरभावेन विद्यात्सोऽहमिति ध्रुवम् ।
एषा बुद्धिश्च विद्वद्भिः समाधिरिति कीर्तिता ॥ १९ ॥
यथा फेनतरङ्गादि समुद्रादुत्थितं पुनः ।
समुद्रे लीयते तद्वज्जगन्मय्येव लीयते ॥ २० ॥

उक्तरूपोपेतमकारं तथाविध उकारे तं च तथाविधे मकारे तं नादे तं मायायां तां च तदुपाधिके जीवे तं च परमात्मनैकीकृत्य तद्रूपेणावतिष्ठत इत्यर्थः ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥

तस्मान्मत्तः पृथङ्नास्ति जगन्माया च सर्वदा ।
इति बुद्धिः समाधिः स्यात्समाधिरिति हि श्रुतिः ॥ २१ ॥

इति हि श्रुतिरिति । " इदं सर्वं यदयमात्मा " इति हि श्रूयते ॥ २१ ॥

यस्यैवं परमात्माऽयं प्रत्यग्भूतः प्रकाशितः ।
स याति परमं भावं स्वकं साक्षात्परामृतम् ॥ २२ ॥

१ क. ख. 'भिर्हृदयकण्ठ मू' । ग. 'भिर्हृदयं कण्ठम्' ।

उक्तसमाधिनिष्ठस्य फलमाह—यस्यैवापीति । परमं भावमित्येतद्गतखण्डतृतीयाध्याये निरूपितम् ॥ २२ ॥

यदा मनसि चैतन्यं भाति सर्वत्रगं सदा ।
योगिनोऽव्यवधानेन तदा संपद्यते स्वयम् ॥ २३ ॥
यदा सर्वाणि भूतानि स्वात्मन्येवाभिपश्यति ।
सर्वभूतेषु चाऽऽत्मानं ब्रह्म संपद्यते तदा ॥ २४ ॥
यदा सर्वाणि भूतानि समाधिस्थो न पश्यति ।
एकीभूतः परेणासौ तदा भवति केवलः ॥ २५ ॥

योगिन इति । व्यवधायकस्याज्ञानस्य निरासात्स्वयं ब्रह्म संपद्यत इत्यर्थः। ॥ २३ ॥ २४ ॥ २५ ॥

यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि स्थिताः ।
तदाऽसावमृतीभूतः क्षेमं गच्छति पण्डितः ॥ २६ ॥

यदा सर्व इति । तज्ज्ञानेनाज्ञाननिरासात्तत्कार्यनिवृत्तौ " योऽकामो निष्काम आप्तकाम आत्मकामो न तस्य प्राणा उत्क्रामन्त्यत्रैव समवनीयन्ते " " ब्रह्मैव सन्ब्रह्माप्येति " इतिश्रुत्युक्तं ब्रह्म संपद्यत इत्यर्थः ॥ २६ ॥

यदा भूतपृथग्भावमेकस्थमनुपश्यति ।
तत एव च विस्तारं ब्रह्म संपद्यते तदा ॥ २७ ॥

यदा भूतेति । भूतानां पृथिव्यादीनां यः पृथग्भावो भेदः स सर्व एकस्मिन्नेव ब्रह्मणि प्रलयदशायां तादात्म्येन स्थित्वा पुनः सृष्टौ तत एव विस्तारं प्रतिपद्यत इति यः पश्यति स ब्रह्म संपद्यत इत्यर्थः । श्रुतिपुराणयोरयं समानः पाठः ॥ २७ ॥

यदा पश्यति चाऽऽत्मानं केवलं परमार्थतः ।
मायामात्रं जगत्कृत्स्नं तदा भवति निर्वृतः ॥ २८ ॥
यदा जन्मजरादुःखव्याधीनामेकभेषजम् ।
केवलं ब्रह्मविज्ञानं जायतेऽसौ तदा शिवः ॥ २९ ॥

१ क. ख. ग. °तीभावः क्षे° । २ क. ख. घ. °मश्नीय° । ३ ग. ङ. स्थिरः । ४ घ. निर्वृतिः । ५ ङ. °तेऽसौ न° ।

तस्माद्विज्ञानतो मुक्तिर्नान्यथा कर्मकोटिभिः ।
कर्मसाध्यस्य नित्यत्वं न सिध्यति कदाचन ॥ ३० ॥
ज्ञानं वेदान्तविज्ञानमज्ञानमितरन्मुने ।
अहो ज्ञानस्य माहात्म्यं मया वक्तुं न शक्यते ॥ ३१ ॥
अत्यल्पोऽपि यथा वह्निः सुमहन्नाशयेत्तमः ।
ज्ञानाभ्यासस्तथाऽल्पोऽपि महत्पापं विनाशयेत् ॥ ३२ ॥

निर्वृतस्तृप्तो मुक्त इत्यर्थः ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥

यथा वह्निर्महादीप्तः शुष्कमार्द्रं च निर्दहेत् ।
तथा शुभाशुभं कर्म ज्ञानाग्निर्दहति क्षणात् ॥ ३३ ॥
पद्मपत्रं यथा तोयैः स्वस्थैरपि न लिप्यते ।
तथा शब्दादिभिर्ज्ञानी विषयैर्न हि लिप्यते ॥ ३४ ॥
मन्त्रौषधिबलैर्यद्वज्जीर्यते भक्षितं विषम् ।
तद्वत्सर्वाणि पापानि जीर्यन्ते ज्ञानिनः क्षणात् ॥ ३५ ॥
पश्यञ्शृण्वन्स्पृशञ्जिघ्रन्नश्नन्गच्छन्स्वपञ्श्वसन् ।
प्रलपन्विसृजन्गृह्णन्नुन्मिषन्निमिषन्नपि ॥ ३६ ॥
अकर्ताऽहमभोक्ताऽहमसङ्गः परमेश्वरः ।
सदा मत्संनिधानेन चेष्टते सर्वमिन्द्रियम् ॥ ३७ ॥
इति विज्ञानसंपन्नः सङ्गं त्यक्त्वा करोति यः ।
लिप्यते न स पापेन पद्मपत्रमिवाम्भसा ॥ ३८ ॥
ये द्विषन्ति महात्मानं ज्ञानवन्तं नराधमाः ।
पच्यन्ते रौरवे कल्पमेकान्ते नरके सदा ॥ ३९ ॥

शुष्कमार्द्रं चेति । परस्परविरोधिनोः शुभाशुभयोरेकरूपेण ज्ञानेन दाहे निदर्शनम् ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥

दुर्वृत्तो वा सुवृत्तो वा मूर्खः पण्डित एव वा ।
ज्ञानाभ्यासपरः पूज्यः किं पुनर्ज्ञानवान्नरः ॥ ४० ॥

---

१ ग °ज्ञानं विज्ञा° ।

ज्ञानाभ्यासपर इति । ज्ञानसाधनयोगाङ्गन्यमाद्यभ्यासवानपि पूज्यः किं पुनर्ज्ञानीत्यर्थः ॥ ४० ॥

निरपेक्षं मुनिं शान्तं निर्वैरं समदर्शिनम् ।
अनुव्रजाम्यहं नित्यं पूयेयेत्यङ्घ्रिरेणुभिः ॥ ४१ ॥
यथा राजा जनैः सर्वैः पूज्यते मुनिसत्तम ।
तथा ज्ञानी सदा देवैर्मुनिभिः पूज्य एव हि ॥ ४२ ॥
यस्य गेहं समुद्दिश्य ज्ञानी गच्छति सुव्रत ।
तस्य क्रीडन्ति पितरो यास्यामः परमां गतिम् ॥४३॥
यस्यानुभवपर्यन्ता बुद्धिस्तत्त्वे प्रवर्तते ।
तद्दृष्टिगोचराः सर्वे मुच्यन्ते सर्वकिल्बिषैः ॥ ४४ ॥
कुलं पवित्रं जननी कृतार्था
विश्वंभरा पुण्यवती च तेन ।
अपारसंवित्सुखसागरे सदा
विलीयते यस्य मनःप्रचारः ॥ ४५ ॥

निरपेक्षमिति। विवेकविज्ञानातिरिक्तस्य निष्फलत्वावधारणाद्विवेकविज्ञानस्य प्राप्तत्वात्कंचिदप्यपेक्षारहितमित्यर्थः । समदर्शिनमिति । तथाच भगवतोक्तम्—
" सुहृन्मित्रार्युदासीनमध्यस्थद्वेष्यबन्धुषु ।
साधुष्वपि च पापेषु समबुद्धिर्विशिष्यते " इति ।
॥ ४१ ॥ ४२ ॥ ४३ ॥ ४४ ॥ ४५ ॥

महात्मनो ज्ञानवतः प्रदर्शनात्सुरेश्वरत्वं झटिति प्रयाति ।
विहाय संसारमहोदधौ नरा रमन्ति ते पापबलादहो मुने॥४६॥
महानिधिं प्राप्य विहाय तं वृथा
विचेष्टते मोहबलेन बालकः ।
यथा तथा ज्ञानिनमीश्वरेश्वरं
विहाय मोहेन चरन्ति मानवाः ॥ ४७ ॥

१ ग. °दर्शन° । २ ग. ङ. पूजयेय° । ३ ङ. °दारम° ।

अहो महान्तं परमार्थदर्शिनं
विहाय मायापरिमोहिता नराः ।
हिताय लोके विचरन्ति ते मुने
विषं पिबन्त्येव महामृतं विना ॥ ४८ ॥
बहुनोक्तेन किं सर्वं संग्रहेणोपपादितम् ॥
श्रद्धया गुरुभक्त्या त्वं विद्धि वेदान्तसंग्रहम् ॥ ४९ ॥

महात्मन इति । श्रूयते हि मुण्डकोपनिषदि–
"यं यं लोकं मनसा संविभाति विशुद्धसत्त्वः कामयते यांश्च कामान् ।
तं तं लोकं जयते तांश्च कामांस्तस्मादात्मज्ञं ह्यर्चयेद्भूतिकामः" इति ।
इत्थं सकलश्रेयोमूलस्य तस्य परित्यागेनान्यत्र प्रवृत्तिः संचितदुरितैकहेतु-केत्याह–विहायेति ॥ ४६ ॥ ४७ ॥ ४८ ॥ ४९ ॥

यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ ।
तस्यैते कथिता ह्यर्थाः प्रकाशन्ते न संशयः ॥ ५० ॥

गुरुभक्तेस्तत्र कारणत्वे श्वेताश्वतरश्रुतिमुदाहरति–यस्य देव इति ॥ ५० ॥

सूत उवाच–
इत्येवमुक्त्वा भगवांस्तूष्णीमास्ते महेश्वरः ।
वक्तव्याभावमालोक्य मुनयः करुणानिधिः ॥ ५१ ॥
बृहस्पतिश्च मुनयो वेदान्तश्रवणात्पुनः ।
आनन्दाक्लिन्नसर्वाङ्ग आत्मानन्दवशोऽभवत् ॥ ५२ ॥
भवन्तोऽपि महाप्राज्ञा भवः(?)प्राप्तात्मवेदनाः ।
अभवन्कृतकृत्याश्च मा शङ्कध्वं कदाचन ॥ ५३ ॥
स्थापयध्वमिमं मार्गं प्रयत्नेनापि हे द्विजाः ।
स्थापिते वैदिके मार्गे सकलं सुस्थिरं भवेत् ॥ ५४ ॥

सूतो मुनीन्संबोध्याऽऽह—इत्येवमुक्त्वेति ॥ ५१ ॥ ५२ ॥ ५३ ॥ ५४ ॥

यो हि स्थापयितुं शक्तो न कुर्यान्मोहतो नरः ।
तस्य हन्ता न पापीयानिति वेदान्तनिर्णयः ५५ ॥

उच्चैर्घोषाय । उच्छ्रितशब्दायोच्छ्रितरवोत्राय । पत्तीनाम् “ एकेभैकरथा त्र्यश्वा पत्तिः ” इत्यमरः । तासां पतये । सत्त्वानां सह सीदतां महाप्रमथगणानां पतये ॥ ६५ ॥ ६६ ॥

ककुभाय नमस्तुभ्यं नमस्तेऽस्तु निषङ्गिणे ।
स्तेनानां पतये तुभ्यं कृत्रिमाय नमो नमः ॥ ६७ ॥

ककुभाय । ककुभो दिशो वासस्त्वेनास्य सन्तीत्यर्शआदित्वादच्, तस्मै ॥ ६७ ॥

तस्कराणां नमस्तुभ्यं पतये पापहारिणे ।
वञ्चते परिवञ्चते स्तायूनां पतये नमः ॥ ६८ ॥

वञ्चते गच्छते वञ्चिर्गत्यर्थः । परिवञ्चते परितः सर्वत्र गच्छते । स्तायूनाम् । छद्मचारिणो ये वस्त्रादीनपहरन्ति कपटसाधुवेषास्ते तायवः “ उत स्मैनं वस्त्रमथिं न तायुम् ” इत्यादौ दर्शनात् । तत्र वा सकारलोपः । अत्र वा सकारोपजनस्तेषां पतये ॥ ६८ ॥

नमो निचेरवे तुभ्यमरण्यपतये नमः ।
उष्णीषिणे नमस्तुभ्यं नमस्ते परमात्मने ॥ ६९ ॥
विस्तृताय नमस्तुभ्यमासीनाय नमो नमः ।
शयानाय नमस्तुभ्यं सुप्ताय नमो नमः ॥ ७० ॥
प्रबुद्धाय नमस्तुभ्यं स्थिराय परमात्मने ।
सभारूपाय ते नित्यं सभायाः पतये नमः ॥ ७१ ॥
नमः शिवाय साम्बाय ब्रह्मणे सर्वसाक्षिणे ॥ ७२ ॥

सूत उवाच—

एवं सुरासुरैरन्यैः शंकरोऽभिष्टुतः पुनः ।
कृत्वा प्रसादं सर्वेषां तत्रैवान्तर्हितोऽभवत् ॥ ७३ ॥
अस्य तीर्थस्य माहात्म्यं स्थानस्यास्य सभापतेः ।
यो वेत्ति श्रद्धया मुक्तिः सिद्धा तस्य महात्मनः ॥ ७४ ॥

यः पठेच्छृणुयाद्वाऽपि मुक्तिखण्डमिमं सदा ॥
स साक्षान्मुक्तिमाप्नोति प्रसादेन समापतेः ॥ ७५ ॥
नमो व्यासाय गुरवे मम विज्ञानदायिने ॥
नमः शिवाय सोमाय साक्षिणे प्रत्यगात्मने ॥ ७६ ॥

इति श्रीस्कन्दपुराणे सूतसंहितायां मुक्तिखण्ड ईश्वर-
नृत्यदर्शनं नाम नवमोऽध्यायः ॥ ९ ॥

निर्वैरवे निभृतं नितरां चरणशीलाय ॥ ६९ ॥ ७० ॥ ७१ ॥ ७२ ॥ ७३ ॥ ७४ ॥ ७५ ॥ ७६ ॥

इति श्रीमत्काशीविलासश्रीक्रियाशक्तिपरमभक्तश्रीमत्त्र्यम्बकपादाब्जसेवा-
परायणेनोपनिषन्मार्गप्रवर्तकेन श्रीमाधवाचार्येण विरचितायां
सूतसंहितातात्पर्यदीपिकायां मुक्तिखण्ड ईश्वरनृत्यदर्शनं
नाम नवमोऽध्यायः ॥ ९ ॥



समाप्तिमगमदेतत्तृतीयं मुक्तिखण्डम् ।

## सूतसंहितायाखण्डत्रयान्तर्गतश्लोकाद्यचरणवर्णानुक्रमः ।

| श्लोकाद्यचरणानि | पृष्ठाङ्काः |
| --- | --- |
| सोऽखर्वाङ्गरथान्रुद्रः .... | २१ |
| सोमतीर्थमिति ख्यातम् .... | १२१ |
| सोमनाथं महास्थानं.... | ५९ |
| सोममण्डलमापूर्णम् .... .... | २३१ |
| सोमार्धशेखरः सोमः .... | १११ |
| सोऽहं ब्रह्म न संसारी .... | २४० |
| सोऽहमित्यनिशं ध्यायेत् .... | २३२ |
| सोंऽशः प्रमाणमित्युक्तम् ... | २६९ |
| सौम्यं महेश्वरं साक्षात् .... | २४७ |
| स्कन्दश्च मरुतस्तस्मिन् ... | २७४ |
| स्तूयमानो महाविष्णुः ... | ३०८ |
| स्तोत्रैः स्तुत्वा महात्मानम् ... | १३४ |
| स्थानं दक्षिणकैलास– ... | ७१ |
| स्थानस्यास्य भये जाते .... | ४६ |
| स्थापयध्वमिमं मार्गम् .... | २४५ |
| स्नात्वा तस्यां नरः पुण्य– .... | २२३ |
| स्नात्वाऽत्रैव महाभक्त्या .... | १३१ |
| स्नात्वा नित्यं महाभक्त्या .... | १२८ |
| स्नात्वा यो वेदतीर्थेऽस्मिन् ... | २७६ |
| स्नात्वा शुद्धे समे देशे .... | ४० |
| स्नानं कृत्वा धनं दत्त्वा .... | १२५ |
| स्नानं कृत्वा महातीर्थे ... | ३२२ |
| स्नानं कृत्वा महादेवं .... | ४७, ६२, २७५, २७६ |
| स्नानं कृत्वा महाभक्त्या ... | १२३ |
| स्नानं कृत्वाऽम्बिकानाथम् ... | २७५ |
| स्नानं कृत्वाऽर्कवारे च ... | २७३ |
| स्नानं शौचमभिध्यानम् ... | १५७ |
| स्मृतयश्च पुराणानि .... | ३१, २७९ |
| स्मृतिमात्रेण सर्वेषां .... .... | ६७ |
| स्रक्चन्दनादिदानं च .... | ५९ |
| स्रवन्तममृतं पश्येत् .... .... | २०० |
| स्वजास्युक्तं यथाशक्ति .... | ११८ |
| स्वच्छन्दं निर्घृणो विप्राः .... | ४५ |
| स्वतेजसा जगत्सर्वम् ... | १३३ |
| स्वतश्च परतो दोषः.... .... | २७८ |
| स्वतःसिद्धात्मभूतायाः .... | २६२ |
| स्वदासवर्गैः सह पुत्रकैः स्वकैः | ३०२ |
| स्वभावादेव संभूतम् .... ... | १०९ |
| स्वयं वा शिश्नतर्पणौ .... | १६२ |
| स्वयं स्वमेव ध्यायन्तम् ... | १३३ |
| स्वयमाविरभूत्तेषाम् .... ... | ११० |
| स्वर्गकामो यदि स्वर्गम् .... | १४८ |
| स्वपापकीर्तनं कुर्वन् .. ... | १६३ |
| स्वभावादेव संक्षुब्धाः .... | ३१५ |
| स्वराट्संज्ञस्य देवस्य .... | ३०९ |
| स्वसारं मुनिशार्दूल .... ... | १६३ |
| स्वस्त्रीदर्शनविद्वेषः ... .... | २९५ |
| स्वस्त्रीषु स्वस्य वेधेन ... | ११३ |
| स्वस्वरूपापरिज्ञानात् . | ११९ |
| स्वाचार्याय महाभक्त्या ... | २९६ |
| स्वात्मविद्याप्रदानेन .... .... | २८३ |
| स्वात्मानन्दानुसंधान– .... | ३०० |
| स्वानुभूत्या स्वयं साक्षात् .... | ५७ |
| स्वान्तर्गृहे शीतलगन्धतोयैः | ३०३ |
| स्वाश्रमे संस्थितः सम्यक् ... | १९९ |
| स्वस्वरूपमहानन्द– ... .... | ३११ |
| **ह** | |
| हत्वा मातरमादाय .... .... | २७२ |


BHARATIYA VIDYA BHAVAN
S N 11651
LIBRARY

---